# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




चतुर्दशवर्षे ४ अङ्कः

संवत् २०१६

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

सम्पादकः

श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः




चतुर्दशवर्षे ४ अङ्कः

संवत् २०१६

# विषय-सूची



—

# सारस्वती सुषमा

वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

| १४ वर्षः | फाल्गुनपूर्णिमा, संवत् २०१६ | ४ अङ्कः |
| --- | --- | --- |

## शून्यवादविमर्शः

डॉ॰ सातकडिमुखर्जी, नालन्दास्थपालिशोधसंस्थानसंचालकः ।

श्रीरामकृष्णाङ्घ्रिसरोजयुग्मे
पीयूषमत्युत्तममस्त्यदभ्रम् ।
तुच्छेन्द्रियार्थान् प्रविहाय तस्मिन्
गाढं पिबन्मज्जतु चित्तभृङ्गः ॥ १ ॥

सत्यानन्दं नमस्कृत्य ध्यात्वा तत्पादपङ्कजम् ।
प्रवर्ते दुःखसाध्येऽर्थे स मामुत्तारयिष्यति ॥ २ ॥

विद्यागुर्वोः पदद्वन्द्वे श्रीयोगेन्द्रसुरेन्द्रयोः ।
नत्वा पुनः पुनर्माध्यमिके किञ्चिद्वदाम्यहम् ॥ ३ ॥

क्वाहं मन्दमतिः क्वेदं दुर्बोधं बौद्धदर्शनम् ।
साहसं चापलं चोभे स्यातां प्रकटिते मुहुः ॥ ४ ॥

तथापि भूमिदेवानां विदुषां प्रत्ययो मम।
अवष्टभ्नाति चेतः स्यात् साफल्यं तदनुग्रहात्॥ ५॥

ये प्राज्ञाः शास्त्रवेत्तारस्ते नाऽस्या विषयः कृतेः।
ये त्वकृतश्रमाः शास्त्रे तेषां कृते ममोद्यमः॥ ६॥

अयि भो उपकुलपतिमहोदय ! गवेषणाध्यक्षचट्टोपाध्यायमहाभाग ! विद्वत्तल्लजाः शास्त्ररहस्यवेत्तारः प्रवक्तारश्च !

फल्गुप्रायेऽप्यस्मिन् प्रबन्धे कृपया भवद्भिरवधानं दीयमानमभ्यर्थये। विदितवेदितव्यानामत्रभवतां न किमपि तिरोहितमविदितचरञ्च वस्तु पुरत उपस्थापयितुं समर्थोऽयं जनः। तथापि विदितेऽपि शास्त्ररहस्ये तस्मिन्नन्यदीयः प्रयत्नः कमपि रसमनुभावयति शास्त्ररसिकान्। अतः कथमयं वक्ता शास्त्रव्याख्यामनुतिष्ठेदिति कुतूहलावेशेन कौतुकानुबुभूषया वा भवन्तोऽत्र प्रस्तूयमाने प्रबन्धे दत्तचित्ता भविष्यन्तीति सम्प्रत्ययः प्रोत्साहयति मामस्मिन् दुष्करे कर्मणि। उक्तञ्च जयन्तभट्टेन—

असंख्यैरपि नात्मीयैः स्वल्पैरपि परस्थितैः।
गुणैः सन्तः प्रहृष्यन्ति चित्रमेषां विचेष्टितम्॥ इति।

(न्यायमञ्जरी, पृ० २)

प्रकृतचिन्तनं प्रस्तौमि।

शून्यवादस्य प्ररूपणा प्रज्ञापारमितादिषु माहायानिकागमेषु तत इतो विप्रकीर्णा दृश्यते। तथापि शास्त्रकारोचितशैल्या तत्प्रतिपादनाभावात् तेभ्यस्तत्त्वनिश्चयो न सुखसम्पादन इति महामतिर्नागार्जुनाचार्यः परप्रवादिनां मतानि पूर्वपक्षविधया समुपन्यस्य तेषां च युक्तिसम्पद्दारिद्र्यं पदे पदे प्रकाशयन् शून्यवाद एव भगवता सुगतेन प्रतिपिपादयिषित इति सिद्धान्तं प्रतिष्ठापयितुकामो माध्यमिककारिकेति नाम्ना प्रामाणिकं शास्त्रं प्रणिनाय। नागार्जुनसन्दब्धं शास्त्रं बहुभिर्व्याख्यातृभिर्व्युत्पादितम्। परन्त्वतीव खेदस्थानमेतद् यत्केवलं चन्द्रकीर्तिप्रणीता प्रसन्नपदानाम्नी वृत्तिरद्यत्वे समुपलभ्यते। ततश्चेदं प्रतीयते यदाचार्यभावविवेकेन प्राक् काचन महार्था वृत्तिर्व्यरचि। सा च स्वातन्त्रिक-माध्यमिकवादस्य आकरः समजनि। भावविवेकाचार्येण आचार्यबुद्धपालितस्य व्याख्यां

क्रियासमभिहारेण दूषयता स्वमतं प्रतिष्ठापितम्। एते चान्ये च मूलग्रन्था विलोपं गताः। केवलं भोटभाषायां तेषां छाया उपलभ्यन्ते। किं बहुना, आचार्यनागार्जुनस्य स्वोपज्ञा अकुतोभया नाम वृत्तिरपि कालवैशसं प्राप्ता दुनोति तन्मतजिज्ञासूनां चित्तम्। भोटभाषायां कृताभियोगैरपि प्रतिबिम्बमात्रदर्शनेन न तृप्तिरासाद्यते। नहि निपुणतमेनापि शिल्पिना निर्मिता प्रतिकृतिर्बिम्बस्थानमधिकर्तुमुत्सहते। यथा तथा भवतु नाम चन्द्रकीर्तिकृता वृत्तिः प्रसन्नपदेति सार्थकं नामधेयं बिभ्रती मूलकारिकार्थानुसन्धाने सुमहदानुकूल्यं पदे पदे प्रयच्छति। भावविवेकादस्य खलु वैषम्यमनुमानशैलीमधिकृत्य। भावविवेकस्तु सांव्यवहारिकं प्रमाणमुररीकृत्य स्वमतं स्थापयामास, परमतं च निराचक्रे। चन्द्रकीर्तिः पुनः प्रसङ्गानुमानं पुरस्कृत्य परमतखण्डनेन कृतार्थम्मन्यः समभूत्। प्रसङ्गानुमानञ्च न्यायाभिमतप्रतिकूलतर्कस्यैव संज्ञान्तरमात्रम्। तच्च परमतदूषणे प्रागल्भ्यमियर्ति। स्वमतञ्च न किमपि निगमयति तत्स्वरूपाभावादेव। ईदृशमेव वादिनं न्यायशास्त्रे वैतण्डिकं प्रतियन्ति तान्त्रिकाः।

अस्य शास्त्रस्य प्राचीनेतिवृत्तवर्णनं नात्यन्ताय प्रस्तुतोपयोगीति कृत्वा इतिवृत्तविमर्शकेषु तादृशं कृत्यभारं निक्षिप्य नागार्जुनस्य तदनुगामिनाञ्च दार्शनिकविचारशैलीमधुना वर्णयितुमुपक्रमामहे। बहुभिः सुधीभिरिहत्यैः प्रतीच्यैः प्राच्यैश्च जापानदेशवास्तव्यैः पराक्रान्तं चात्र विषये। तेषाञ्च व्याख्यानेषु बहुमुखी विप्रतिपत्तिर्दृष्टचरी आयासयति विविदिषूणां चेतांसि। बहवः खलु सम्प्रतितना मनीषिण एतं शून्यवादसिद्धान्तं विधिमुखेन व्याचक्षते। प्राचीनास्तु ग्रन्थकाराः सौगतेतरे सौगतमतानुयायिनश्च एनं निषेधमुखेनैव व्यावर्णयन्ति। अतीव कौतुकस्थानमेतद्यत् किमपि नागार्जुनस्य वचनं भावभूतशून्यवादप्रमापकं नोपस्थाप्यते केनापि भावपक्षपातिनाधुनिकविदुषा। एतत्तु उपरिष्टादवदातीकरिष्यते।

ग्रन्थारम्भे प्रतीत्यसमुत्पादमुपदिष्टवते भगवते सम्बुद्धाय नमस्कृत्य प्रतीत्यसमुत्पाददर्शनमेव प्रपञ्चोपशमहेतुरित्यभिदधत् प्रतीत्यसमुत्पादं कार्यकारणभावापरपर्यायं परीक्षमाण आचार्यः—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥ (मू० म० १।१)

इति कारिकामुपन्यस्यति। समासेन खलु एतस्याः कारिकाया अयं निष्कृष्टार्थः—सांख्याभिमते सत्कार्यवादे कार्यस्य कारणात्मना सत एवाभिव्यक्तिरिति भङ्ग्यन्तरेण स्वहेतुकमेव कार्यं प्रतिज्ञायते, तन्निगदव्याख्यानेनैव निराकृतम्। नहि पौर्वापर्यघटितः कार्यकारणभावस्तयोरभेदं ख्यापयति। तदेव पूर्वमपरञ्चेति विप्रतिषिद्धम्। एतदेव उपोद्बलयता चन्द्रकीर्तिना—

तस्माद्धि तस्य भवने न गुणोऽस्ति कश्चि-
ज्जातस्य जन्म पुनरेव च नैव युक्तम्॥
(म० वृ० पृ० १३)

इति विपक्षबाधकं प्रमाणमुपन्यस्तम्। सांख्यस्तु असत्कार्यवादे बह्वीरनुपपत्तीः प्रदर्शयन् अनायत्या सत्कार्यवादं परिशेषयति। परन्तु सोऽपि पक्षो न विप्रतिपत्तेर्निर्मुक्तः। विद्यमानस्य कार्यस्य पुनरुत्पादने कर्तृव्यापारो निरर्थको भवेत्। अथ अनभिव्यक्तस्याभिव्यक्तिसम्पादने कर्तुर्व्यापारसाफल्यमिति मनीषितम्, तदपि न हृदयमावर्जयति। अभिव्यक्तिः कार्याभिमतादभिन्ना चेत्, तथाविद्यमानपूर्वा चेत्, तदा कार्यमिव सती अभिव्यक्तिर्न पुरुषव्यापारमपेक्षेत। अथ परस्मादेवाविद्यमानपूर्वमेव कार्यं भवतीति पक्षस्तथापि कार्यकारणसम्बन्धानुपपत्तिः। तथा हि—परत्वाविशेषे तिलेभ्यस्तैलं न सिकताभ्य उत्पद्यत इति नियमानुपपत्तिरविहता। अथ स्वपरपक्षयोः प्रतिस्वं कार्यकारणभावानुपपत्त्या उभयोः समुदितयोरेव कारणभावः कल्प्येत, तदा प्रत्येकपक्षाभिहितदोषो वज्रलेपायेत। अथाऽहेतुतः कार्यमुत्पद्यतामिति स्वभाववादिनश्चार्वाकस्य मतमुपादीयेत तदापि न निस्तारः, कादाचित्कस्य कार्यस्य हेतुनिरपेक्षस्य विप्रतिषिद्धत्वात्। अहेतुकं कार्यं सदैव भवेद् हेत्वनपेक्षणात्, कदापि वा न भवेदसत्त्वात्। एवं समासेन सर्वप्रवादिमतसिद्धं कार्यकारणभावं प्रत्याचक्षाणाः कादाचित्कस्य कार्यस्य निःस्वभावत्वमेव प्रख्यापयन्ति 'माध्यमिकाः। कार्यं सत् सर्वदैवेति सांख्याः। कार्यं सदेव पूर्वमसदपीति नैयायिकाः। उभयोरपि कार्यस्य स्वभावतः सत्तायां सम्प्रतिपत्तिः। माध्यमिकस्य तु उभयत्रापि बलवती विमतिः। यदि सत्ता कार्यस्य स्वभावः, कार्यं कदापि न सत्तां जह्यात्। नहि असत्सद्भवितुमर्हति, तथात्वे सदसद्विवेकहानात्। न हि स्वभावतः सन् पदार्थः कदाप्यसन् भवेत्, स्वभावस्यानपायित्वात्। यत् सत्तत्सदेव यदसत्तदसदेव। नहि वस्तु कदाचित् सत् कदाचिद्वा-

सद्भवितुं क्षमते, सत्त्वासत्त्वयोः सामानाधिकरण्यासम्भवात्। न वा कालभेदेनासत्सद्भवेत् सद्वाऽसद्भवेत्, यथा घटः कपालेष्वसन्नपि पश्चात् सत्तां लभते प्रध्वंसानन्तरमसत्तामुपयातीति नैयायिकानां पक्षमपि न समुचितं मन्यन्ते माध्यमिकाः। नहि कालेन वस्तुस्वभावोऽन्यथा कर्तुं शक्यते। न वा पराभिमतमाकाशं कालभेदेन सत्तामसत्तां वा भजमानं दृश्यते। न च आमघटः श्यामः सन् पश्चादापाके पक्वो रक्ततामुपैति, न च रूपभेदेन घटस्य तादात्म्यहानिः, प्रत्यभिज्ञानादिति वाच्यम्; यदि घटस्य श्यामत्वं स्वभावो न कदाप्यसौ रक्तो भवेत, यदि स्वभावेन रक्तो न कदाप्यरक्तः स्यादिति तर्कस्य दुरुत्तरत्वात्।

एतामेव युक्तिमवष्टभ्य वस्तुनः क्षणिकत्वं सिद्धान्तयति क्षणभङ्गवादी। तस्य मते यत्सत्तत्क्षणिकमिति निर्व्यूढैव व्याप्तिः। सत्ता चार्थक्रियाकारिता। 'अर्थः' कार्यं तस्य 'क्रिया' सम्पादनं तत्कारित्वमेव सत्त्वं प्रतिज्ञातम्। वस्तु कारणं भवति, कारणञ्च कार्यायोगव्यवच्छेदि। नहि कार्यकरणशक्तावप्रतिहतायां कार्यस्यानुत्पत्तिः सम्भविनी, समर्थस्य क्षेपायोगात्। यत्समर्थं तत्करोत्येव, सामर्थ्यकरणयोः समनैयत्यात्। नहि नित्यः पदार्थ एतन्मते समस्ति, नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरहात्, अर्थक्रियारहितस्य च सत्त्वायोगात्। न चानित्यो भवतु क्षणिको मा भूदिति वाच्यम्, क्षणिकत्वाक्षणिकत्वाभ्यां सर्वं सत्त्वं व्याप्तम्। यदि क्षणिको न स्यादक्षणिको भवेत्, अक्षणिको न स्यात्क्षणिको भवेत्, राश्यन्तराभावात्। परस्परविरुद्धयोरेकतरनिषेधोऽन्यतरविधिनान्तरीयकः। अक्षणिकश्चासन्निति क्षणिकत्वपक्ष एव सत्तायाः पर्यवसानमिति संक्षेपेण सौत्रान्तिकसिद्धान्तः प्रतिपादितो विस्तरभीरुभिरस्माभिः।

अर्थक्रियाकारित्वमेव सत्त्वम्। न च वस्तु किञ्चिदक्षणिकमुपपद्यत इति सौत्रान्तिकेन माध्यमिकस्यैकवाक्यता, परन्तु कारणत्वमेव सत्त्वमिति सौत्रान्तिकमतविमर्दे पर्यवस्यति। कारणञ्च निःस्वभावं दर्शितं माध्यमिकेन। अतोऽर्थक्रियासामर्थ्यमेव सत्त्वमिति प्रतिजानानाः सौत्रान्तिकादयोऽपहस्तिताः। न केवलमत्र युक्तिः, अपि तु आगमा अपि बहवः कार्यकारणभावस्य मृषात्वं स्वारसिकतया प्रतिपादयन्ति। अथ यदि स्वतः परत उभयतोऽहेतुतश्च नास्ति भावानामुत्पादस्तर्हि "अविद्याप्रत्ययाः संस्काराः" इति कथं प्रतीत्यसमुत्पादस्योपदेशो भगवता कृत इति

चेत्, संवृत्येति गृहाण। संवृतिश्चाविद्या। अभिधानाभिधेयकार्यकारणादिलोकव्यवहारोऽविद्यया एव प्रवर्तते। तदपोहनार्थं भगवता विनेयजनाशयानुरोधेन तथा तथोपदेशः प्रदत्तः, अविद्यावासनानिवृत्त्यर्थम्। नहि एकपद एव लोकस्य तत्त्वावतारः संभवतीति लोकव्यवहारसिद्धेन प्रमाणादिना तत्त्वोपदेशः कृतो मार्गावताराय। इमे च सूत्रान्ता नेयार्थाः। ये सूत्रान्ताः फलावताराय निर्दिष्टास्त उच्यन्ते नीतार्था यत्र शून्यतायाः साक्षादुपदेशः। एवं सर्वबाह्यवस्तूनां प्रतीत्यसमुत्पन्नत्वान्मृषात्वं प्रतिपादितम्।

अथ वैभाषिकादिपरिकल्पितानां पदार्थानां प्रमाणविरोधान्निःस्वभावत्वं तत्तदध्यायेषु प्रतिपादितं महता संरम्भेण। न च सर्वेषां परीक्षणमत्र संभवति, उपयुज्यते वा। तथाप्यकृतग्रन्थपरिचयानां कुतूहलोत्पादनार्थं विषयगुरुत्वं चापेक्ष्य केषाञ्चित्परीक्षणमत्र प्रस्तूयते। स्थालीपुलाकन्यायेन तावतैव नागार्जुनस्य विचारपरिपाटीं परिचिनुयाद् व्युत्पित्सुः प्रेक्षावान्। यथा हि नैयायिकानां मते न किमपि वस्तु निर्धर्मकं संभवति, लक्षणप्रमाणाभ्यां च वस्तुसिद्धिर्भवति, एवं वैभाषिकाणामपि सलक्षणमेवाभिमतं सर्वं वस्तु। तथा हि शास्त्रे पृथिव्यप्तेजोवाय्वाकाशविज्ञानाख्याः षड्धातवो वैभाषिकैरङ्गीकृताः। शालिस्तम्बादिसूत्रेषु तेषां निरूपणं विस्तरेणोपलभ्यते। तत्राकाशमनावरणलक्षणमुच्यते। एवं पृथिव्यादीनां काठिन्यादिकं लक्षणमुपदिष्टं शास्त्रे। लक्षणसद्भावादाकाशादीनां स्वभावः स्वीकरणीय इति वैभाषिस्य पक्षे स्थिते लक्ष्यलक्षणाभावं परीक्षत आचार्यनागार्जुनः। अलक्षणं चेदाकाशादिकं तत् खपुष्पायितमिति वैभाषिकस्य पक्षः। लक्ष्याल्लक्षणं भिन्नमभिन्नं वा ? आद्ये लक्षणं सलक्षणे वा प्रवर्तेत अलक्षणे वा ? तत्र सलक्षणे लक्षणस्य प्रवृत्तेः कैमर्थक्यं स्पष्टम्, नहि लक्षणद्वयमुपलभ्यत उपयुज्यते वा। तथा चैकेन लक्षणेन यत् क्रियते द्वितीयेनापि लक्षणेन यदि तदेव क्रियेत तर्हि पिष्टपेषणवदनर्थकं स्याद् द्वितीयं लक्षणम्। अथालक्षणे लक्षणस्य प्रवृत्तिरभ्युपगम्यते, तदाऽवस्तुन्येव लक्षणस्य प्रवृत्तिरूरीकर्तव्या। अलक्षणं च वस्तु खपुष्पसममुक्तम्—

अलक्षणो न कश्चिच्च भावः संविद्यते क्वचित्।
असत्यलक्षणे भावे क्रमतां कुह लक्षणम् ॥ इति।

(मू० म० ५।२)

तथा च सलक्षणोऽलक्षणो वा लक्षणस्य प्रवृत्त्यसम्भवान्नहि लक्षणेन वस्तुसिद्धिः। असाधारणधर्मो हि लक्षणमुच्यते। तेन च सजातीयविजातीयव्यवच्छेदेन निर्लुंठितगर्भतया वस्तुस्वरूपं परिचायितं भवति। दृष्टा च लक्ष्याल्लक्षणस्य भेदे तयोः सम्बन्धानुपपत्तिः। अथ लक्ष्यलक्षणयोरनन्यत्वमभ्युपेयते तदा लक्षणरहितमेव वस्तु विस्पष्टं कथितम्। लक्षणाभावाच्च दृश्यमात्रस्यावस्तुत्वं निःस्वभावत्वं चावसितं भवति। किञ्च, स्वभाव एव न संभवति कस्यचित्। तथा हि—उपलभ्यमानं वस्तु यदि सस्वभावं भवेत् तर्हि न तस्य हेतुप्रत्ययापेक्षा। स्वभावेन विद्यमानानां हेतुप्रत्ययैर्न कोऽप्यतिशयः सम्पादयितुं शक्यो यथा वर्तमानानां घटाङ्कुरादीनां भूयो निष्पत्तये न हेतुप्रत्ययापेक्षा विद्यमानत्वादेव हेतोः। एवं यद्यन्येऽपि भावाः स्वोत्पत्तेः प्राग् विद्यमानाः स्युस्तदा तुल्यन्यायेन हेतुप्रत्ययनिरपेक्षा भवेयुस्ते। अथास्वभावस्यापि प्रागविद्यमानस्य पश्चात् कारकव्यापारात् स्वभावप्रतिलम्भस्तदा स्वभावः कृतक एव भवेत्। अथ कृतकस्यैव स्वभावस्याभ्युपगमान्न कृतकत्वप्रसङ्गोऽस्माकमनिष्ट इति प्रत्यवस्थीयेत, तदपि न हृदयङ्गमम्, यतः—"स्वभावः कृतको नाम भविष्यति पुनः कथम्" ( मू० म० १५।२ )। कृतकः स्वभावश्चेति परस्परं विरुद्धम्। यस्त्वकृतको धर्मः स एव स्वभावो यथा अग्नेरौष्ण्यम्। कृतकश्चापामौष्ण्यवन्न स्वभावो भवितुमर्हति। तर्हि भवत्वग्नेरौष्ण्यमपां शैत्यं स्वभाव इति कुतो निःस्वभावत्वं भावानां त्वदभिमतं सिध्येदित्यपि प्रत्यवस्थानमयुक्तम्। संवृतिमादाय कृत्वा चिन्तया अज्ञव्युत्पादनार्थमुदाहरणं दत्तम्। वस्तुतस्तु अग्न्यादीनामपि न सस्वभावत्वं सिद्धम्, तेषां मणीन्धनादित्यरश्मिसंयोगादुत्पत्तेः। न चाग्निव्यतिरिक्तमौष्ण्यम्। संवृतिमाश्रित्यैव परमार्थोपदेशः संभवति। अन्यथा अविद्यातिमिरोपहतमतिनयनानामविद्यातो निष्क्रमणं न संभवेत्। यत्त्वभिधर्मे वस्तूनां स्वलक्षणं सामान्यलक्षणं चोपदिष्टं तत्सांवृतं स्वरूपमभिप्रेत्यैव, औष्ण्यमग्नेरन्यत्रानुपलब्धमसाधारणं रूपं सत् स्वमेव लक्षणमिति कृत्वा। एवं साधारणमनित्यत्वादिकं सामान्यलक्षणम्। यदा त्वविद्यातिमिरापगमे प्रज्ञाचक्षुरुन्मीलति विनेयस्य तदा—"नायं स्वभावो भावानाम्" ( म० वृ० पृ० २६१ ) इत्युपदिश्यते।

भवतु हेतुप्रत्ययसम्भूतस्याग्न्यादेरौष्ण्यादिकं हेतुप्रत्ययसंभूतत्वेन कृतकत्वाविशेषान्निःस्वभावम्। तर्हि किं पुनरिदानीं स्वभावस्य लक्षणं विवक्षितम्?

"अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च" ( मू० म० १५।२ ) इति गृह्यताम्। स्वो भावः स्वभाव इत्युच्यते। स चाकृत्रिमः। यच्च यस्य स्वायत्तं तत्तस्यात्मरूपम्। यच्चाग्न्यादेः कालत्रयेऽप्यव्यभिचारि रूपं तत्स्वभाव इति व्यपदेशमर्हति। किमयं स्वभावोऽग्न्यादेरस्तीति वा नास्तीति वा न वक्तुमर्हम्। परमार्थतस्त्वनिर्वाच्यत्वेऽपि विनेयानामुत्त्रासपरिहारार्थं धर्माणां धर्मता स्वभाव इत्युच्यते। स च स्वभावः शून्यतेति नैःस्वाभाव्यमिति तथतेति च व्यपदिश्यते। तथता च तथाभावोऽविकारित्वं सदैव स्थायिता सर्वदानुत्पादः। ईदृशश्च स्वभावो भावानां नोपलभ्यते। स च स्वभावो वाङ्मनसयोः पन्थानमतिक्रम्यैव वर्तते। परमार्थतस्तु—"स चैष भावानामनुत्पादात्मकः स्वभावोऽकिञ्चित्त्वेनाभावमात्रत्वादस्वभाव एवेति कृत्वा नास्ति भावस्वभाव इति विज्ञेयम्" ( म० वृ० पृ० २६५ )।

न च भावस्य प्रतिषेधेऽभावो न प्रतिषिध्यते। तस्मादभावसद्भावे सिद्धे भावोऽपि सेत्स्यति प्रतिद्वन्द्वित्वात्, भावमपेक्ष्यैवाभावस्य प्रतीतिसम्भवात्। नहि प्रतियोग्यनुयोगिभ्यामनिरूपितोऽभावः कस्यापि बुद्धिगोचरो भवेत्। अतोऽभावसिद्धौ भावसिद्धिर्नान्तरीयका। अस्मिन्नाक्षेपे माध्यमिकस्य समाधानम्—भावस्यासिद्ध्युद्भावनेन तद्विपरीतस्याभावस्याप्यप्रसिद्धिरधिकरणासिद्धान्तविधया समापतति, यावता "भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः" ( मू० म० १५।५ ) इति भावस्यैवान्यथाभावमापन्नस्याभावव्यपदेशाद्भावाऽभावेऽभावोऽपि सुतरामसिद्धः। ये तु वैभाषिकादयो बुद्धवचनाविपरीतव्याख्यातृमानिनो भावमभावं स्वभावं परभावं चाभ्युपगच्छन्ति, ते न बुद्धवचनस्य रहस्यमधिगतवन्तः। तथा हि—वेदनाया विषयानुभवो विज्ञानस्य विषयप्रतिविज्ञप्तिः स्वभाव इत्येवं स्वभावं भावानां वर्णयन्ति। अन्यद्विज्ञानमन्यद्रूपमिति परभावं वर्णयन्ति। विज्ञानादिकञ्च अतीताध्वानं प्राप्तमभाव इति प्रतिपादयन्ति। न ते परमगम्भीरस्य प्रतीत्यसमुत्पादस्य तत्त्वं परिचिन्वन्ति। स्वभावपरभावादीनामस्तित्वमुपपत्तिविरुद्धं प्रख्यापितमेव। कथं वोपपत्तिविरुद्धं पदार्थस्वभावं प्रतिपादयेयुस्तथागताः। भगवद्वचनं प्रमाणमिति प्रतिज्ञाय तत्रोपपत्तिविरोधमुपेक्षमाणा गजनिमीलिकामाचरन्तो वैभाषिकादयः कथमुपादेयवचना भवेयुः। भगवता च भावाभावविभाविना भावाभावप्रतिषेधः समुपदिष्टः। तथा च किं तत्त्वमिति प्रश्ने रत्नकूटसूत्रे—"अस्तीति काश्यप अयमेकोऽन्तो नास्तीति काश्यप अयमेकोऽन्तः।

यदेनयोर्द्वयोरन्तयोर्मध्यं तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमनिकेतमविज्ञप्तिकमियमुच्यते काश्यप मध्यमा प्रतिपद्धर्माणां भूतप्रत्यवेक्षा" ( म० वृ० पृ० २७० ) इति । तथा च अस्तित्वनास्तित्वतदुभयानुभयपक्षविवर्जितं शून्यत्वमेव तत्त्वमिति प्रतिपादितं माध्यमिकैः । उक्तञ्च प्राग् यदग्न्यादीनां स्वभावतोऽस्तित्वं नास्ति । तदभावान्नास्तित्वमपि न सद्भवितुमर्हति यथा वैशेषिकादयः सप्तपदार्थवादिनः सङ्गिरन्ते । यद्यस्तित्वं वस्तुनः स्वभावः स्यान्न कदाचित्तस्य नास्तिता सम्भवेत् । दृश्यते च हेतुप्रत्ययसम्भूतानां कादाचित्कं नास्तित्वम् । अतस्तेषां निःस्वभावत्वं बलादापद्यते । स्वभावास्तित्ववादिनां दर्शने शाश्वतवादो दुष्परिहारः प्रसज्यते । "नास्तीदानीमभूत्पूर्वमित्युच्छेदः प्रसज्यते" ( मू० म० १५.११ ) । उभयोरपि वादयोर्वैतथ्यं कण्ठरवेणाघोषितं भगवता ।

ननु भावानां स्वभावो नास्तीत्यभ्युपगच्छतां माध्यमिकानां मा भूच्छाश्वतदर्शनम्, उच्छेददर्शनं त्ववर्जनीयं तैरिति चेत् ? उच्यते—नैवाभावदर्शनं माध्यमिकानामापादयितुं शक्यम् । यः पूर्वं भावस्वभावमभ्युपगच्छन् पश्चात्तन्निवृत्तिमाचष्टे स पूर्वोपलब्धस्वभावापवादादुच्छेददृष्टिर्भवेत् । माध्यमिकैस्तु न किञ्चिदुपलभ्यते । अतः किं निषिध्येत । केवलं विपर्यस्तानां मिथ्याग्राहनिवृत्त्यर्थं न सन्ति सर्वभावा इति निषेधमुखेन तत्त्वावतारार्थं प्रवचनं क्रियते । विज्ञानवादिनस्तु परतन्त्र-परिकल्पित-परिनिष्ठित-स्वभावाभ्युपगमेन अन्तद्वयपरिहारं प्रत्याययन्ति । तथा हि—परतन्त्रचित्तचैत्तमुपगम्य परिकल्पितस्वभावाभावादस्तित्वदर्शनं परिजिहीर्षन्ति । संक्लेशव्यवदाननिबन्धनस्य परतन्त्रस्य च सद्भावमातिष्ठन्ते । ते च परिकल्पितस्यापवादान्नास्तित्वदर्शनात्परतन्त्रस्य चास्तित्वाभ्युपगमादस्तित्वदर्शनान्न निर्मुच्यन्ते । हेतुप्रत्ययजनितस्य परतन्त्रस्य सस्वभावत्वायोगात्तदस्तित्वप्रतिपादनं तेषामानुपपत्तिकं दर्शनं गमयति । यदि पुनः परतन्त्रस्यापि लोकसंवृतिसिद्धत्वं कृत्वा चिन्तयाभ्युपगतमिति मन्यते, तदापि परिनिष्ठितस्य सर्वकालं विद्यमानत्वाङ्गीकारात् शाश्वतदर्शनमपरिहरणीयमेव । माध्यमिकदर्शनमेव अस्तित्वनास्तित्वपक्षपरिहारात् शाश्वतोच्छेददर्शनाभ्यामकलङ्कितं तत्त्वं प्रतिपादयति, न विज्ञानवादादिदर्शनमिति कण्ठगर्जनेन प्रतिपादयति चन्द्रकीर्तिः (म० वृ० पृ० २७५) । एतेनैव सांख्यमतमौलूक्यमतं वैशेषिकमतं निर्ग्रन्थमतं साम्मितीयपुद्गलवादश्च प्रत्याख्यातानि वेदितव्यानि । ननु तर्हि

विज्ञानादिवाददेशनायाः का गतिरिति चेत् ? नेयार्थत्वेन परमार्थदर्शनस्योपायभूतत्वात्ते वादा विनेयजनाशयानुरोधाद्भगवता तत्र तत्रावारिताः। न च तेषां परमार्थतत्त्वपरत्वमारेकणीयम्।

भवन्तु निःस्वभावा भावाः। भाववदभावोऽपि निःस्वभावो भवतु। कथं तर्हि "अभावाः सर्वधर्माः शून्याः सर्वधर्माः" इति प्रज्ञापारमितावचनम् (म० वृ० पृ० २७८) उपपद्येत। उच्यते—अध्यारोपापवादन्यायेन विवक्षितं भावं प्रतिषेधयन्नभाव इति व्यपदेशः। परमार्थतस्तु शून्यतैव तत्त्वम्। सा च नोत्पद्यते न वा निरुध्यत इति कृत्वा भावाभावादिचतुष्कोटिविनिर्मुक्ततत्त्वप्रतिपादने तद्वचनस्य तात्पर्यमवसातव्यम्।

## नैरात्म्यवादः

अधुना सर्वसौगतसम्प्रदायविद्भिरङ्गीकृतो नैरात्म्यवादो विचारार्थं प्रस्तूयते। सांख्यन्यायवैशेषिकादिप्रतिपादितात्मवादे बौद्धानां बलवती विप्रतिपत्तिः। आत्मवादं सत्कायदृष्टिसमुद्भूतं कल्पनामात्रसिद्धमित्यातिष्ठन्ते एकवाक्यतया सर्वे सौगतमतानुसारिणः। यद्यपि तेषां परमार्थतत्त्वविषये मिथो विप्रतिपत्तयः स्थवीयस्य उपलभ्यन्ते, परस्परमतखण्डने च महता संरम्भेणोद्यच्छन्ति शाक्यपुत्रीयाः, निर्वाणस्वरूपे च तेषां विमतयः प्रसृमरा दरीदृश्यन्ते, तथापि नित्यः कूटस्थः परिणामी वा अखण्ड आत्मा नास्तीति सर्वेषामेव सिद्धान्तः। नास्माभिः सौगतानां परस्परमात्मस्वरूपभेदप्रतिपादने मतवैषम्यं विचारणीयमस्मिन् प्रस्तावे ग्रन्थविस्तरपरिजिहीर्षया। माध्यमिकमतमेवात्मनः सत्त्वासत्त्वप्रतिपादने समुत्कर्षकाष्ठां भजते। तन्मते च प्रतिपादिते मतान्तराणि निरवकाशीकृतानि भविष्यन्ति। तन्मतविचारश्चास्माभिः प्रस्तुतः। आत्मस्वरूपविचारात्प्राक् प्रश्नोऽयं समुदेति कथं भगवता बुद्धेनात्मनास्तित्वप्रतिपादने एतावान् प्रयत्नः समास्थितः। किंनिबन्धनश्चात्मप्रद्वेष इति। आत्मा चाहंकारममकारनिबन्धनम्, तन्मूलाश्च रागद्वेषादयः क्लेशास्तद्धेतुकश्च संसारः प्रवर्तते घटीयन्त्रवदनिशमित्यात्मस्नेहनिवारणार्थं नैरात्म्योपदेशः। आत्मन्यसति न तस्मिन् रागो न वा तदनुकूलेषु प्रणायस्तत्प्रतिकूलेषु द्वेषः। आत्माभावे ते ह्युच्छिन्नमूलत्वात् समूलघातं निहता भवन्ति। परन्तु नहीच्छामात्रेण प्रयोजनापेक्षया वा वस्तुनोऽसत्त्वं प्रमाणसिद्धं भवति। तस्मादात्मनस्तत्त्वपरीक्षणं प्रारब्धं तन्मतानुसारिभिर्दार्शनिकरीत्या। रूपवेदना-

संज्ञासंस्कारविज्ञानरूपाः पञ्च स्कन्धा एवात्मत्वेनाभिमन्यन्तेऽविद्यावशंवदैः। स्कन्धेभ्यश्चात्मा पार्थगर्थ्येन नोपलभ्यते। न चाहङ्कारविषय एवात्मेति मन्तव्यम्। तथात्वे संसारानुच्छेदप्रसङ्गः। रूपं तावद् बाह्यशरीरारम्भकं सर्वेषामेव प्रत्यक्षसिद्धम्, वेदना सुखाद्यनुभवात्मिका, संज्ञा च घटत्वपटत्वादिनिमित्तग्रहणात्मिका, घटपटादिविषयश्च विज्ञानमध्यात्ममध्यक्षेणावसीयन्ते। समुदाचरद्वृत्तयो रागद्वेषादिक्लेशोपक्लेशाः संस्काराख्याः सर्वेषामनुभवसिद्धाः। ये च वासनात्मकाः संस्कारास्तेऽपि कार्यान्यथानुपपत्त्या नापह्नोतुं शक्यन्ते। एत एव प्रत्येकमनेकत्वात् स्कन्धा इति व्यपदिश्यन्ते। रूपव्यतिरिक्ताः स्कन्धा आत्मनो गुणा इति वैशेषिकाः, अन्तःकरणधर्माश्चेति सांख्याः। यथा तथा भवतु नाम, एतैर्गुणैर्विरहितो न कश्चिदनुगामी आत्मपदार्थः प्रत्यक्षगोचर इति बौद्धानामाशयः। आत्मनि यद्यपि विवादस्तद्धर्माभिमतेषु स्कन्धादिषु न कस्यचिदपि वैमत्यम्। कस्तावत्स्कन्धानामात्मना सम्बन्धः। यदि तेऽभिन्ना भवेयुः स्कन्धवदुदयव्ययभाग् भवेदात्मा। न चैतदिष्यते केनाप्यात्मवादिना। तर्हि न स्कन्धा आत्मा भवन्ति। आत्मा स्कन्धव्यतिरिक्तो भवतु का हानिरिति चेत्? उच्यते--यदि स्कन्धेभ्यो भिन्न आत्मा स्यान्न स्कन्धलक्षणो भवेत्। स्कन्धाश्चोत्पादस्थितिभङ्गलक्षणयुक्तास्तद्व्यतिरिक्तश्चात्मा उत्पादादिविरहितः सन् नित्यो भवेत्। भावश्च नित्यो न संभवति। अतः स्कन्धव्यतिरिक्त आत्मा खपुष्पवदलीक एव भवेत्। अथवा स्कन्धलक्षणानाक्रान्त इष्यमाण आत्मा पृथग् लक्षणवान् यद्यभविष्यत्तदा तथैवोपालप्स्यत। न चोपलभ्यते, अत आत्मा केवलमविद्यातिमिरोपहतबुद्धिभिः कल्प्यमानो न तत्त्वतो व्यवतिष्ठते। तस्मात् स्कन्धेभ्यो भेदाभेदाभ्यामनुपपद्यमानो नास्तीत्यध्यवसातव्यः। केवलं स्कन्धानुपादायाहंकारः प्रवर्तमान आत्मग्राहं विवेकशून्यानां दृढीकरोति। आत्मा च स्वप्नमरीचिसदृशोऽहंकारममकारौ द्रढयन् संसारमविच्छिन्नं प्रवर्तयति। योगी चात्मानमपश्यन्निर्ममो निरहङ्कारः सम्पद्यमानो निर्वाणमधिगच्छति। परमार्थतस्तु शून्यतादर्शिनोऽपि न सद्भावः। तथा चोक्तम्—"न विद्यते सोऽपि कश्चिद्यो भावयति शून्यताम्" (म० वृ० पृ० ३४८) इति। एवञ्च ममेत्यहमिति विकल्पे क्षयं प्राप्ते सत्कायदृष्टिप्रहाणात् कामदृष्टिशीलव्रतात्मवादरूपमुपादानचतुष्टयमनायासं प्रहीयते। एवञ्च कर्मक्लेशक्षयात् शून्यतायां पर्यवस्यति विवेकी।

अथ यदि आत्मनास्तित्वमेव तत्त्वं सुगतस्य प्रतिपिपादयिषितं भवेत्तदा—

आत्मा हि आत्मनो नाथः को नु नाथः परो भवेत्।
आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः॥
.....................................................
आत्मा हि आत्मनः साक्षी कृतस्यापकृतस्य च॥
(म० वृ० पृ० ३५४)

इति बुद्धवचनं कथं न व्याहन्येत? इत्याक्षिप्ते आत्मानङ्गीकारेऽन्यान्यपि वचनान्यात्मप्रतिक्षेपपराण्युदाहरति वृत्तिकारः। तथा हि—"नास्तीह सत्त्व आत्मा वा धर्मास्त्वेते सहेतुकाः। रूपं नात्मा रूपवान्नापि चात्मा रूपे नात्मा नात्मनि रूपम्"(म० वृ० पृ० ३५५) इत्यपि भगवता प्रतिपादितं किं न रोचये:। अन्योन्य-विरोधश्च नाविपरीततत्त्वदर्शिनि सुगते शास्तरि संभाव्यत इत्यन्यथैवास्याभिप्राय उन्नेतव्यः।

अस्य च गूढाभिप्राय इत्थं निरूपितश्चन्द्रकीर्तिना। लोकायतिकाः खलु देहातिरिक्तमात्मानमपह्नुवानाः परलोकमनभ्युपयन्तो देहावसानेनैवात्मनो निवृत्तिमाचक्षते। ते चोच्छेदवादिनः। तन्मतनिराकरणार्थमात्मास्तित्वोपदेश आगमेषु तत्र तत्रोपलभ्यते। ये पुनः सद्भूतात्मदर्शिनो नित्यमात्मानमातिष्ठन्ते तेषां शाश्वतदृष्टि-प्रहाणार्थमात्मनास्तित्वमपि प्रतिपादितम्। वस्तुतस्तु बुद्धैरात्मा वा अनात्मा वा नोपदिष्टः। एतस्यैवावष्टम्भकमागमवाक्यं विस्तरेणोपन्यस्तम्। अनन्तरम्—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥ (मू० म० १८।९)

इति नागार्जुनवचनं पुरस्कृत्य सर्वं प्रतीयमानं वस्तुजातं निःस्वभावं गन्धर्वनगर-मायामरीचिस्वप्नवत्कल्पनानिर्मितं प्रतीतिमात्रसारं परमार्थतोऽलीकमिति सिद्धान्तं निगमयति। यथा बाह्यवस्तुजातं नास्ति, एवमात्मापि, एवं स्कन्धा अपि, एवं क्लेशा अपि, एवं व्यवदानमपि मृषास्वभावम्। किं बहुना संसारनिर्वाणयोरपि न कश्चिद-वस्तुत्वे भेदः। तथागतोऽपि, तदनुशिष्टं शास्त्रमपि, सर्वं तैमिरिककल्पितकेशोण्डुक-वन्मोघस्वभावं प्रत्यपीपदत्। सर्वञ्च भ्रान्त्या तथा तथा प्रतिभासते। अविद्याप्रभावा-सादितप्रत्ययगोचराः सर्वे भावा निःस्वभावाः। सा चैव भ्रान्तिरसत्ख्यातिरूपा न किमप्यधिष्ठानमाश्रित्य प्रवर्तते, अधिष्ठानस्याभावान्निःस्वभावत्वमविशिष्टमेव।

आत्मनोऽसत्त्वे तत्त्वज्ञानेन निश्चिते सद्भावे च प्रतिषिद्धेऽहंकारममकारत्त्वयात् स्वत एव निर्वाणमधिगतं भविष्यतीति माध्यमिकस्य नैरात्म्यवादोपपादनम्। निर्वाणस्वरूप-पर्यालोचनेन चायमेव सिद्धान्तः सुदृढभूमिकायां प्रतिष्ठितो भविष्यति। एतावता प्रपञ्चेन विप्रतिपत्त्यनवकाशेन सिद्धमेतत्तत्त्वं यत्सर्वं मायामात्रं यत्किञ्चिद् वस्तुत्वेन प्रतीतिगोचरो भवति। नात्र किञ्चिद्भावात्मकं वस्तु प्रतिष्ठां लभते। चन्द्रकीर्तिप्रति-पादितं नागार्जुनवचनोपबृंहितमागमादिभिः पौनःपुन्येन निरवकाशवचनैश्च भूयसा संरम्भेण प्रतिपादितं भावाभावकोटिद्वयासंस्पर्शि शून्यत्वमेव सर्वभावनैःस्वाभाव्यापर-पर्यायं बलात्कारेणान्यथाकर्तुमशक्यं माध्यमिकस्य चरमराद्धान्तभूतं प्रतिपन्नं भवति।

## निर्वाणम्

अधुना निर्वाणस्वरूपं माध्यमिकसम्मतं विचारार्थं प्रस्तूयते। यदि सर्वं शून्यं क्लेशादयोऽपि शून्याः स्युः संसारोऽपि शून्यो भवेत्। तर्हि कस्य प्रहाणाद्वा निरोधाद्वा निर्वाणमधिगम्येत। निर्वाणस्याप्यसत्त्वे सर्वं बुद्धशासनं वैकल्यं जुषेत। अयं तावत्सर्वसौगतसमयप्रविष्टानां सिद्धान्तो यत्खलु निरवशेषस्याविद्या-रागादिक्लेशस्य प्रहाणात् सोपधिशेषनिर्वाणमधिगम्यते तत्त्वज्ञानिभिः। उपधिश्च पञ्चोपादानस्कन्धाः, उपधीयतेऽस्मिन्नात्मस्नेह इति व्युत्पत्त्या। स च शिष्यते यस्मि-न्निर्वाणे तत्सोपधिशेषं जीवन्मुक्त्यपरपर्यायं निर्वाणमुच्यते। स्कन्धपञ्चकमात्रं सत्कायदृष्ट्यादिक्लेशतस्कररहितमत्रावशिष्यते। एतच्च निहताशेषचौरगणग्रामेणो-पमेयं भवति। देहान्ते परिनिर्वाणे स्कन्धमात्रमपि नास्ति। अत एव निर्गत उपधिशेषः अस्मादिति व्युत्पत्त्या एतन्निरुपधिशेषं निर्वाणमुच्यते। एतच्च निहताशेषचौरगणस्य ग्रामस्यापि विनाशेनोपमीयते। पूर्वत्र स्कन्धमात्रे स्थितेऽपि सत्कायदृष्ट्यादिविरहाद् जीवन्मुक्तस्य संसारसत्यताभ्रान्तिः पुनर्नोपजायते। द्वितीये च निर्वाणे सत्कायदृष्टि-विषयतायोग्यस्य स्कन्धपञ्चकस्यापि विरहात् सर्वथा जन्ममरणप्रपञ्चस्य समूलघातं प्रतिहतिर्भवति। तथा चोक्तम्—"प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः" (म० वृ० पृ० ५२५) इति निरुपधिशेषनिर्वाणस्य विवरणम्। एतच्च निर्वाणद्वयं यथाक्रमं क्लेशानां स्कन्धानाञ्च प्रहाणादुपपद्यते। यदि पुनर्न कश्चिद्धर्म उत्पद्यते न वा निरुध्यते तदा कथं क्लेशानां प्रहाणम्, कथन्तरां वा स्कन्धानां निरोधः सम्भवेत्।

तदभावे च निर्वाणमसंभवदुक्तिकं भवेत्। तस्मान्निर्वाणोपपत्त्यर्थं क्लेशादीनां प्राक्सत्त्वमुररीकरणीयम्। तेषाञ्च खपुष्पवदसत्त्वे निर्वाणमपि निःस्वभावं स्यात्। इष्यते च निर्वाणमसंस्कृतम्। एवं पूर्वपक्षिणा कृताक्षेपे शून्यवादिनः प्रतिबन्दी-विधया पर्यनुयुञ्जते। यदि क्लेशाः स्कन्धाश्च स्वभावतो विद्येरन् तर्हि स्वभावसतां तेषां कथं वा निरोधः सम्भवेत्। नहि स्वभावतः सन् पदार्थोऽसत्तामुपेयात्। तेषां निःस्वभावत्वे एव निरोध उपपन्नो भवेत्। अभ्युपगम्यैतदुच्यते। नहि सतो वा निरोधः संभवति, असतश्च निरोधोऽसंभवी अप्रयोजनश्च। नह्यसतो वन्ध्यापुत्रस्य निरोधः केनापि शक्यक्रियः। कीदृशं तर्हि निर्वाणं माध्यमिकस्य सम्मतम्? उच्यते—

अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते॥ (मू० म० २५।३)

अयं च निष्कर्षः—न हि निर्वाणं प्रहीयते, न वा प्राप्यते, नाप्युच्छिद्यते, नापि नित्यं सदभिव्यज्यते, नापि निरुध्यते, नाप्युपपद्यते। एवंभूतं हि निर्वाणं निष्प्रपञ्च-मूरीक्रियते। क्लेशस्कन्धादीनां निरोधस्तु कल्पनामात्रम्, केवलमविद्यान्धितप्रज्ञा-चक्षुषां प्रज्ञप्त्यर्थं तादृशी कल्पना आगमेषु प्रतीयते। आह—यद्यपि निर्वाणे न सन्ति स्कन्धाः क्लेशा वा, तथापि तदधिगमात् प्राक् तेषां सद्भावोऽवश्यमङ्गीकरणीयः, येषां परिक्षयान्निर्वाणमधिगंस्यते, इतरथा निर्वाणमिति पदमर्थशून्यं प्रसज्येत। उच्यते—यदि क्लेशाः स्वभावतो विद्यमाना अभविष्यन् न तेषामभावः शक्यसम्पादनः समज-निष्यत। अतो निर्वाणप्रेप्सुना ईदृशी कल्पना दूर एव त्यक्तव्या। उक्तञ्च पुनः पुनः प्रसङ्गमापाद्य संसारस्य शून्यत्वं क्लेशादीनां निःस्वभावत्वञ्च। अतः परमार्थविचारे संसारनिर्वाणयोर्न किञ्चिदन्तरम्। सर्वथा सुस्थितमेतद्यन्निर्वाणेन न कस्यचित्प्रहाणं न वा कस्यचिन्निरोधः, सर्वथा यावदसद्भूतकल्पनापरिक्षयलक्षणं निर्वाणमवसितं भवति। यथा खल्वन्धकारे रज्जुसर्पस्य प्रदीपोदयादनुपलब्धिरेवं क्लेशादिलक्षणस्य प्रज्ञोदयादनुपलम्भ एव निर्वाणम्। नहि रज्जुसर्पस्यान्धकारावस्थायां स्वरूपतः सत्त्वमासीदिति केनापि स्वस्थमतिना कल्पयितुं शक्यम्। एवं संसारावस्थायां क्लेश-कर्मादीनामपि परमार्थसद्भावो न कल्पनीयः। कथं तर्हि संसार इत्युच्यते, केवलं भ्रान्त्या आत्मात्मीयग्राहानुरोधाद्बालपृथग्जनानामसन्तोऽपि भावाः सत्त्वेन प्रतिभा-सन्ते, यथा तैमिरिकाणामसन्तः केशकलापाः। अत एव निर्वाणमस्तीति नास्तीति

वा कल्पनाया अगोचरे वर्तते। अस्तीति तावत्तीर्थिकानां स्वयूथ्यानां वैभाषिकाणाञ्च, नास्तीति लोकायतिकादीनां केषाञ्चन श्रावकयानीयानां चाभिमानः। विज्ञानवादिनामपि परिकल्पितस्वभावनास्तित्ववादिनां परतन्त्रपरिनिष्पन्नस्वभावास्तित्ववादिनामपि निर्वाणस्वरूपमनुपपत्तिपराहतम्। वैभाषिकास्तावन्निर्वाणं भावत्वेन प्रतिपद्यन्ते। तन्मते क्लेशकर्मादीनां नियतरोधभूतो जलप्रवाहरोधभूतसेतुस्थानीयो निरोधात्मकः पदार्थो निर्वाणम्। स च भावभूतोऽसंस्कृतो नित्यमवस्थानात्। यत्तु प्रद्योतस्येव निर्वाणमिति तृष्णाक्षयरूपं निर्वाणं प्रतिपाद्यते, तदपि भ्रान्त्यैवाभावत्वेन व्याचक्षतेऽतात्पर्यज्ञाः। नहि तृष्णायाः क्षय एव निर्वाणं किन्तु तृष्णायाः क्षयोऽस्मिन्निति। प्रदीपश्च दृष्टान्तमात्रम्। नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यं सम्भवति, सर्वथा साम्ये तत्त्वानुपपत्तेः।

एवं भावरूपे निर्वाणे प्रतिज्ञाते प्रत्युच्यते माध्यमिकेन। भावस्तावन्न निर्वाणं तस्य जरामरणलक्षणाविनाभावित्वात्। नहि कश्चिद्भावो जरामरणविरहितः संभवति। नह्यसंस्कृतः कश्चिद्भाव उपपद्यते जरामरणाव्यभिचारित्वात्। उक्तञ्च—"नासंस्कृतो हि विद्यते भावः क्वचन कश्चन" ( मू० म० २५।५ ) इति। किञ्च यदि निर्वाणं भावः स्याद्धेतुप्रत्ययमाश्रित्यैवोत्पद्येत। तथा च जरामरणप्रसङ्गस्तदवस्थः। अभावस्तर्हि निर्वाणं भवतु, भावप्रतिषेधेऽभावस्य पारिशेष्यात् सिद्धिः। एतदपि अतत्त्वज्ञस्यैव कुचोद्यमभावस्य भावान्यथात्वप्रतिपादनात्। असति भावेऽभावस्याप्यसिद्धिः। यदि अनित्यतालक्षणोऽभावः स तर्हि भावमनपेक्ष्य नात्मानमासादयेत्। यदि भावस्यैव प्रागभावप्रध्वंसाभावलक्षणोऽभावः स्यात्तर्हि शशशृङ्गादीनामभावः कथं सेत्स्यति। नहि तेषामभूत्वा भावो भूत्वा वाऽभावः कल्पयितुं शक्यः। तस्मादत्यन्ताभावलक्षणोऽप्यभावो वैशेषिकैरुररीक्रियते। अत्र माध्यमिकस्यैतत्प्रतिवचनम्। यद्यपि—

आकाशं शशशृङ्गं च वन्ध्यायाः पुत्र एव च।
असन्तश्चाभिलप्यन्ते तथा भावेषु कल्पना॥

( म० वृ० पृ० ५२८ )

इति माध्यमिकेनैवाभावस्य दृष्टान्तविधयोपादानं कृतम्। असत्प्रतियोगिकश्चाभावोऽसत्ख्यातौ कृतनिर्भरायां शून्यवादिनां नानुपपन्नस्तथाप्येतेषामभावत्वं नाङ्गीकरोति वृत्तिकारः। तन्मते भावकल्पनाप्रतिषेधमात्रं शशशृङ्गादिदृष्टान्तेन

विधित्सितमाचार्येण। वन्ध्यापुत्र इति त्वर्थहीनं शब्दमात्रं चन्द्रकीर्तिर्मन्यते। तथा च निर्वाणं नेदृशमभावरूपं सम्भवति।

अथ यदि निर्वाणमभावात्मकं भावात्मकं वा न समस्ति, तर्हि कथं तस्य स्वरूपज्ञानम्। नह्यज्ञात्वा स्वरूपं निर्वाणमीदृशमनीदृशं वा समाख्यातुं शक्यम्। अपरस्य ज्ञानस्याभावे कल्पनानिर्मितमेतन्निर्वाणं प्रसज्येत। न वा शास्त्रप्रामाण्यात्तत्सिद्धिः, शास्त्रस्याप्यपरोक्षप्रमामूलकत्वात्प्रामाण्यस्य। न च निर्वाणे प्रतिपत्ता कश्चिदस्तीति भवानभ्युपगच्छति। कथं तर्हि केनैवदित्थम्भूतं निर्वाणमस्तीति परिच्छिद्यते। यदि योगी योगजप्रत्यक्षेण परिच्छिन्द्यात्तस्य परिच्छेदस्य सत्त्वमकामेनाऽप्यङ्गीकर्त्तव्यम्। अस्मिन्नेवंविधे प्रश्ने जाग्रति माध्यमिकः केवलं प्रतिवन्द्या समाधानमिच्छति। न खलु विज्ञानेन सविकल्पेन निर्वाणस्वरूपपरिच्छेदः सम्भवति, तस्य सप्रकारकत्वात्। निर्धर्मकञ्च निर्वाणं धर्मिग्राहकमानसिद्धम्। धर्मिग्राहकञ्च मानं यदि निर्विकल्पकं तस्य खलु शून्यतालम्बनस्य निःस्वभावत्वमास्थेयम्, अन्यथा संस्कृतत्वप्रसङ्गात् तदपि जरामरणविनिर्मुक्तं न भवेत्। तेन च जरामरणविनिर्मुक्तस्य निर्वाणस्यैवं परिच्छेदाभावे न तत्रेमा अस्तित्वनास्तित्वादिकल्पनाः सावकाशा भवेयुः। तदनुभवितापि तथागतस्तथैव अस्तित्वनास्तित्वकल्पनया न कदर्थनीयः। सर्वविकल्पातीतमेतन्निर्वाणं यत्र सर्वस्योपलम्भस्य प्रपञ्चस्योपशमः सम्पद्यते। स च ज्ञेयस्यानुपलब्ध्या प्रपञ्चोपशमो ज्ञानस्यानुपलब्ध्या च शिवः। यथा च संसारः शून्यस्वरूप एवं निर्वाणमप्यनुत्पादात्मकं शून्यस्वरूपं विज्ञातव्यम्। उक्तञ्च भगवता—

अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम्।
आकाशेन कृतो ग्रन्थिराकाशेनैव मोचितः॥ इति।

(म० वृ० पृ० ५४०)

प्रज्ञाकरमतिना बोधिचर्यावतारपञ्जिकायां नवमे परिच्छेदे शून्यतातत्त्वं विस्तरेण विचार्य निर्वाणं शून्यस्वभावं तद्ग्राहकञ्च विज्ञानमपि भावाभावकोटिचतुष्कनिर्मुक्तमनुत्पादात्मकं निर्वाणमवगाह्य आलम्बनाभावान्निरिन्धनवह्निवत् स्वयमेवोपशाम्यतीति प्रतिपादितम्। शून्यतायामपि नाभिनिवेशः कर्तव्योऽन्यथाऽभिनिवेशस्याप्रहाणादनिर्मोक्षो दुष्परिहारः प्रसज्येत।

शून्यतायाश्च भावस्वभावशून्यत्वं स्वकण्ठेनैव पुनः पुनरावेदितं सदपि कथमस्य

भावात्मकत्वं साम्प्रतिकैर्व्याख्यातृभिः कल्पितमिति न बोद्धु शक्नुमः। यदि कश्चित् संशयलेशस्तथाप्यनुवर्तेत तदा तस्य निरसनं चन्द्रकीर्तिवचोभिरेव शक्यसम्पादन-मित्याविष्कुर्महे। नास्तिकाविशिष्टा माध्यमिका ये खलु कुशलाकुशलं कर्म इहलोकं परलोकं च भावस्वभावशून्यमिति प्रतियन्ति। नास्तिका अपि लोकायतिका एतदेव मतं स्वसिद्धान्तमुद्घोषयन्ति। अतस्तन्मतान्माध्यमिकमतस्य कुतो विशेषः। एवं प्रत्यवस्थाने चन्द्रकीर्तिर्माध्यमिकदर्शनस्य विशेषं प्रतिपादयन्नाह—माध्यमिकाः खलु हेतुप्रत्ययसमुत्पन्नत्वात् परलोकादिकमपह्नवते। चार्वाकास्तु केवलमाहोपुरुषि-कयाऽदृष्टिमात्रेण परलोकादिकमपलपन्ति। न च तेषां काचिद्युक्तिसम्पदिति महान् विशेषः। वस्तुस्वरूपेण नास्तित्वं यद्युभयोरपि तुल्यवत्प्रतिपन्नं तथापि प्रतिपत्तृ-भेदादनयोर्भेदः स्थवीयान्नोपेक्षणीयः। तथा हि यदि वस्तुतः कृतचौर्यं पुरुषमपरिज्ञायैव कश्चनामित्रभावाच्चौर्यमनेन कृतमित्यभ्याचक्षीत। अपरश्च दृष्ट्वैव कृतचौर्यं चौरं राजपुरुषेभ्यो निवेदयेत्तदाऽनयोर्वस्तुसत्त्वमाश्रित्य साम्येऽप्येकस्तत्र मृषाभाषी, अपर-स्तु यथाभूतार्थवादीति तयोर्भेदः, एवं नास्तिकमाध्यमिकयोर्महान् भेदः (म० वृ० पृ० ३६८–९)। निश्चप्रचमेतद्यत् शून्यवादी सर्वेषामेव भावानां प्रतीतिसिद्धानां परमार्थतो निःस्वरूपे सत्त्वाभावे पर्यवसानं सिद्धान्तयति। ज्ञातुर्ज्ञेयस्य ज्ञानस्य वा न सद्भावमुपैति।

सर्वाभाववादी माध्यमिको न कञ्चन नित्यं भावमङ्गीकरोति, भावश्च न नित्य इत्यत्र न कामपि युक्तिं पुरस्करोति। अर्थक्रियाकारित्वमेव सत्त्वमिति क्षणिकवादि-सिद्धान्तमवलम्ब्य तस्य नित्यतापह्नवो न माध्यमिकस्य सुलभः। कार्यकारणभावानङ्गी-कारेऽर्थक्रियाकारित्वस्यासम्भवान्न क्षणिकत्वसिद्धान्तः प्रतितिष्ठति। यदि त्वात्मनो ज्ञानेच्छादिधर्मानुपातिनः सम्बन्धानुपपत्त्या विरोधमवलम्ब्य तदस्तित्वमपह्नुवीत तदपि न प्रेक्षावतां चेतसि चमत्कारमाविर्भावयति। तार्किकैः समवायसम्बन्धाङ्गीकारेण तस्य यत्समाधानं कृतं यदि तस्मै तन्न रोचेत, भेदाभेदवादिनां मीमांसकानामार्हतानाञ्च सिद्धान्तोऽनुपादेयः स्यात्, तथाप्याध्यासिकसम्बन्धमुररीकृत्य सांख्यानां वेदान्तिनाञ्च ज्ञानज्ञेयव्यवहारः कथं प्रत्याख्येयः। नह्यर्थक्रियाकारित्वमेव सत्त्वमिति सिद्धान्तः प्रमाणसिद्धः। भ्रमरूपाऽर्थक्रिया न वस्तुतत्त्वं साधयितुमलम्। भ्रान्त्यापि रज्जुसर्पे ज्ञाते तस्य बाधेऽपि भीतिकम्पादयोऽनुवर्तमाना नापह्नोतुं शक्याः। किञ्चार्थक्रिया-

कारित्वमपि यद्यर्थक्रियाकारित्वान्तरेण सिद्धं तदानवस्था कथं परिहर्तव्या। अथ प्रतीतिसिद्धं वस्तूनामन्यथान्यथात्वमवलम्ब्यानित्यत्वं भावानामवसीयते तर्हि प्रतीतेः प्रामाण्यमशक्यापह्नवं भवेत्, प्रतीतिश्च यथाऽस्थिरत्वं भावानामवगाहते एवं स्थिरत्वमपि। अत उभयोरुपपत्तिः सम्पादनीया, न तु सर्वथा परित्यागो हृदयावर्जकः। अर्थक्रियाकारित्वं यदि न सत्त्वप्रमापकं किं तर्हि सत्ताया लक्षणम्। अबाधितप्रतीतिविषयत्वमेवेति गृह्यतामायुष्मता।

किञ्च, हेतुसाध्यपक्षव्याप्त्याद्यनङ्गीकारे कथं विचारः सम्भवेत्। यदि परमतसिद्धं प्रमाणप्रमेयभावमभ्युपगम्य परविचारे स्वविरोधादिदूषणाभिधानमेव माध्यमिकेन क्रियेत तर्हि तदीयेऽपि विचारे हेत्वाभासानां प्रदर्शनेन तस्य भ्रान्तत्वं सिध्येदित्यवश्यमङ्गीकर्तव्यं माध्यमिकेन। यदि स्वपक्षाभावान्न तस्य बाधकेन किमप्यनिष्टमाचरणीयमित्यध्यवसायस्तदा तेन सार्धं विचारो निरर्थकः स्यात्। तथा चाहुः—

यदि काचन प्रतिज्ञा स्यान्मे तत एव मे भवेद्दोषः।
नास्ति च मम प्रतिज्ञा तस्मान्नैवास्ति मे दोषः॥ इति।

(विग्रह० २६)

यथा यथा वा तन्मतनिराकरणं क्रियतां तथा तथा स्वपक्षाभावव्याजेन तन्निराकरणमसौ निष्फलीकुर्यात्। अत एव भगवता शङ्कराचार्येण वेदान्तभाष्ये तर्कपादे सौत्रान्तिकविज्ञानवादयोर्विचारमनुष्ठाय माध्यमिकवादे न प्रयत्न आस्थितः। उपेक्षैव कृता तेन तन्मतविचारस्य कैमर्थक्यं निश्चित्य—"शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते" इति ब्रुवता।

उदयनाचार्येण स्वकृतात्मतत्त्वविवेके शून्यवादसिद्धान्त एवं निराक्रियते—शून्यतैव परमं निर्वाणमिति यदि पक्षस्तदा सा सिद्धाऽसिद्धा वा। यद्यसिद्धा वाङ्मात्रमेव पर्यवस्येत्। यदि (साक्षिप्रत्ययरूपात्) परतः सिद्धा परोऽप्यभ्युपगन्तव्यो ग्राह्यलक्षणत्वं च शून्यताया अवर्जनीयमिति। यदि परः संवृतिरेव तर्हि शून्यतापि सांवृती स्यात्। अथासंवृतिरूपः परस्तस्यापि परतः सिद्धानवस्था। स्वयमसिद्धश्चेत् कथं शून्यत्वमपि साधयेत्। स्वतः सिद्धश्चेत्तर्हि आयातोऽसि मार्गेण (स्वप्रकाशत्वस्य) औपनिषदपक्षस्याङ्गीकारात्। स एव हि वेदान्तिनः सिद्धान्तः। स्वतः सिद्धतया तन्निर्वाणमनुभवरूपम्। तथा हि—"स्वतः सिद्धतया तदनुभवरूपम्।

शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम्। अत एव च न देशावच्छेद इति व्यापकम्। अत एव तन्निर्धर्मकमिति विचारास्पृष्टम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। अत एव विशेषाभाव इत्यद्वैतम्, प्रपञ्चस्यापारमार्थिकत्वाच्च। निष्प्रतियोगिकमिति विधिरूपम्, अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः।" (आत्मतत्त्वविवेके, पृ० ५३४ ए० सो० सं०)। उदयनस्तु न्यायमतावलम्बेन बौद्धमतनिराकरणे प्रयत्नमातिष्ठते। अतः खलु यद्यपि तस्यौपनिषदे सिद्धान्ते बलवती आस्था, तथापि—"तदास्तां तावत्, किमार्द्रकवणिजो वहित्रचिन्तया" इति ब्रुवाणोऽयं नैयायिकपक्षमालम्ब्य बौद्धमतनिराकरणे प्रायतिष्ट। पुनश्च ज्ञानमपि सांवृतं निर्वाणं गोचरयतीति सिद्धान्तं "यथा यथा च बुद्धिनिवारणाय यत्नस्तथा तथोज्वलः प्रकाशः। तन्निवारणमपि बोद्धव्यमेवेति" (आ० त० वि० पृ० ६ ३) इति शून्यवादखण्डनमुपसंजहारोदयनाचार्यः। यथा चात्मास्तित्वाङ्गीकारेऽपि न रागद्वेषादयः प्रसरं लभेरन् तथा विज्ञानवादविचारावसरे प्रदर्शयिष्याम इति शम्॥

---

# विज्ञानवादविमर्शः

डॉ० सातकडिमुखर्जी, नालन्दास्थपालिशोधसंस्थानसंचालकः ।

माहायानिकागमेषु विज्ञानवादस्य विप्रकीर्णतया प्रतिपादनं प्रतीतिगोचरीभवति । परन्तु लङ्कावतारादिसूत्रेषु विज्ञानवादे वा परमं तात्पर्यं शून्यवादे वा तत्र तत्र समुपन्यस्यमानानां बुद्धवचनानामिति महान् विशयस्तत्तद्ग्रन्थाध्येतॄणां चेतसि समुन्मिषति । संकीर्णतयैव प्रमाणभूतेषु महायानिकेष्वागमेषु शून्यवादविज्ञानवादयोः प्ररूपणमुपलभ्यते । यथा खलु उपनिषद्वाक्यानामद्वैतिभिरद्वैतपरतया व्याख्यानं क्रियमाणं दृश्यते, विशिष्टाद्वैतादिभिश्च तेषामेव वाक्यानामन्यथाऽन्यथा स्वसिद्धान्तानुकूलतया विवरणं क्रियमाणं दरीदृश्यते, एवं बौद्धागमवाक्यानामपर्यायमेव दशा समजनि । तत्र ये खल्वापातविरोधिनः सूत्रान्तास्ते नेयार्थाः, ये पुनः स्वसिद्धान्तानुकूलास्ते नीतार्था इति भेदव्यवस्थापनेन आगमानां व्याख्यानं न अन्यतरमतस्य स्वारसिकतया आनुकूल्यं प्रातिकूल्यं वा समाचरेत् । केवलमागमैकशरणानाम् असंकीर्णसिद्धान्तप्रतिष्ठापने सामर्थ्यं न प्रादुःष्यादिति त्वस्माकं दृढतरः सम्प्रत्ययः । समन्वयस्तु बुद्धिकौशलेन व्याख्यातॄणां न अशक्यानुष्ठानः । तथा च—"व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी" (नैष० १७।५०) इति श्रीहर्षस्य वचनमाभाणकवत् प्रचरद्रूपं गरीयसो मतभेदस्य रहस्यमुन्मीलयति ।

विज्ञानवादस्य प्रस्थानद्वयं स्थूलदृष्ट्यास्माकमुपलब्धिगोचरो भवति । प्राचीनं प्रस्थानं मैत्रेयासङ्गोपज्ञं वसुबन्धुना समुपबृंहितं शास्त्रोचितशैल्या प्रतिपाद्यमानं प्रमीयतेऽस्माभिः । दूयामहे यत्खलु अश्वघोषप्रणीतं श्रद्धोत्पादसूत्रमधुना विलुप्तम् । केवलं चैनिकभाषायां तस्यच्छाया दृश्यते । स च चैनिकभाषानुवाद आङ्ग्लभाषयाऽनूदितः श्रीमता सुगृहीतनामधेयेन जापानदेशीयपण्डितवरेण सुजुकिमहोदयेन । महायानसूत्रालङ्कारः सव्याख्यः; विज्ञप्तिमात्रतासिद्धिर्वसुबन्धुकृता व्याख्योपेता, मध्यान्तविभागस्य च टीका प्राचीनयोगाचारमतावबोधे प्रमाणीभवन्ति । ह्वेनचाङ्नामा सुप्रथितचैनिकपण्डितः स्वभाषया वसुबन्धुकृतविज्ञप्तिमात्रतासिद्धेर्भाष्यं समाकलयाञ्चक्रे । तस्य खलु फ्रेंचभाषया विवरणात्मानुवादः पुष्यनाम्ना पण्डितप्रका-

यडेन प्रणीय प्राकाश्यं नीतः। तथापि मूलभूतसंस्कृतवाङ्मयस्य विरहे तेभ्यो ग्रन्थेभ्यः संशयविपर्यासानास्कन्दिता व्युत्पत्तिर्नातिसुलभा भवति। वसुबन्धुकृता विज्ञप्तिमात्रतासिद्धिरपि पुष्कलव्याख्यारहिता न निस्संशयितां प्रतिपत्तिमादधाति। तथापि यावदुपलभ्यते तावतैव सन्तोष्टव्यमस्माभिः। तत्रापि ये खलु प्रमेया न संशयपदवीमतिवर्तन्ते तेषां महायानसूत्रालङ्कारमध्यान्तविभागटीकादिभिश्च संवादनेन तदेकवाक्यतानुरोधेन च समुपपादनं विधेयं विद्वद्भिः। अर्वाचीनं प्रस्थानं दिङ्नागोपज्ञं धर्मकीर्तिना कृतोपबृंहणमाकरग्रन्थाभावान्न चेतसि चमत्कारमाविष्करोति। दिङ्नागप्रणीतः प्रमाणसमुच्चयो नोपलभ्यते। तदुपपादकं प्रमाणवार्तिकं धर्मकीर्तिविरचितमस्मत्सौभाग्योदयेन प्राकाश्यं नीतं महापण्डितेन राहुलसांकृत्यायनेन। परन्तु ग्रन्थवरोऽयं पुष्कलव्याख्यासमुपबृंहितो नोपलभ्यते। मनोरथनन्दिकृता टीका अतीव संक्षिप्ता न परितर्पयति चित्तम्। कर्णगोमिकृतञ्च व्याख्यानं खण्डश उपलभ्यते। यावत्पर्यन्तं प्रमाणसमुच्चयस्य व्याख्योपव्याख्यासहितस्य प्रादुष्करणं न भविता तावदस्माकं तन्मतपरिज्ञानमर्धजरतीयन्यायविषयतां नातिपतिष्यति। अतः खलु पुष्कलप्रामाणिकग्रन्थापरिचयाद् बुद्धिमान्द्याच्च प्रस्तूयमाने विज्ञानवादव्याख्याने बहुशो न्यूनता अनुपपत्तयश्च अप्रतिपत्तयश्चोत्तानीभविष्यन्ति। अशक्तिकृतं स्खलनजातं क्षमाधनैर्विद्वद्भिर्मर्षणीयमिति प्रार्थयामहे।

विज्ञानवादे सर्वप्रस्थानैर्निर्विशेषेण बाह्यार्थस्यासंभवं सिद्धवत्कृत्य विज्ञानमेव परमार्थसत् तत्त्वं वासनावशाद्विविधबाह्यपदार्थाकारेण प्रतिभासत इति निर्विवादः सिद्धान्तः। विज्ञानमेकमनेकं वा क्षणिकमक्षणिकं वेति विषये प्राचीननवीनप्रस्थानयोर्यद्यप्यप्रतिसमाधेयो विरोधस्तथापि बाह्यार्थापह्नवे सर्वेषां विज्ञानवादिनामेकवाक्यतैव। वसुबन्धुना विंशतिकायां विज्ञप्तिमात्रमेव तत्त्वं बाह्यवस्तूनाञ्च प्रतिभासमानानामसत्त्वं बाह्यवस्त्वभावेऽपि स्वप्नादिवद्देशकालादिनियमः सन्तानानियमश्च शक्योपपादन इति प्रदर्शितम्। यदि बाह्यं वस्तु नास्ति तत्प्रतिभासञ्च विज्ञानं भ्रान्तं स्यात् तर्हि कथं सर्वेषामेव प्राणभृतां तद्दर्शनमविशेषेणोपपद्यत इत्यारेकायां देशकालनियमः स्वप्नदृष्टान्तेन व्याख्यायते। यद्यपि शुक्तिरजतादिप्रत्ययः कस्यचिदेव प्रातिस्विक उपजायते, तथापि नारकाणामिव बहूनामेकाकारभ्रमो नासम्भवी। तथा हि नरकपालादीनां दर्शनं नारकाणां तुल्यकर्मविपाकानां भ्रान्त्यैव अहमहमिकया सञ्जायते।

न च नरकपालादीनां वस्तुसतां तत्र सम्भवः, यावता तेषां नरकादिदुःखभोगाभावान्नारकाणां जीवानामिव दुष्कर्मपरिणामादेव तत्र समुत्पादो न कल्पयितुं शक्यः। तस्माद्देशकालादिनियमेन बहूनां सन्तानानामनियमेन एकाकारप्रत्ययानुरोधेन बाह्यार्थसद्भावो नानुमातुं शक्येत, सन्दिग्धविपक्षव्यावृत्तिकत्वाद्धेतूनाम्। बाह्यार्थासद्भावेऽपि सन्तानानियमादिहेतूनां सद्भावदर्शनेन अनैकान्तिकत्वं स्पष्टमेव। एवं तर्हि बाह्यार्थसद्भावो भवतु सन्दिग्धः, कथं तस्य सिद्धवत्कारेण प्रतिषेधो विज्ञानवादिनां संगच्छेत। यावद् बाह्यार्थासद्भावप्रमापकं बलवत्तरं प्रमाणं नोपस्थाप्यते न तावद्विज्ञप्तिमात्रतासिद्धान्तः सुदृढभूमिकायां प्रतिष्ठितो भवेत्।

ईदृशीमाशङ्कामुत्प्रेक्ष्य वसुबन्धुर्बाह्यार्थो नोपपद्यत इति सिद्धान्तं बाह्यार्थस्य स्वरूपपरीक्षणेनैव निश्चाययति। घटपटादयश्च बाह्यार्था भासमाना एकरूपा वाऽनेकरूपा वा भासेरन्। परमाणव एव घटपटादीनामुपादानकारणतयाभ्युपेयन्ते वैशेषिकैः। तत्र परमाणुद्वितयं संयुक्तं सद् द्व्यणुकं भवति, त्रिभिश्च द्व्यणुकैरेकस्त्रसरेणुरुत्पद्यते। द्व्यणुकपरिमाणस्याणुपरिमाणादभिन्नत्वात् संख्याबहुत्वेन स्थूलत्वसंभव इति कृत्वा द्व्यणुकत्रितयारब्धस्त्रसरेणुरेव आद्योऽवयवी समुपेयते। त्रसरेणूनाञ्च परस्परं संयोगे स्थौल्यतारतम्यमुपपन्नं भवतीत्यवयवातिरिक्तावयविकल्पनया वस्तूनां परिमाणतारतम्यमुपपादयन्ति वैशेषिकाः। वैभाषिकैस्त्ववयवेभ्यः पृथग्भूतोऽवयवी नाङ्गीक्रियते। एवं सौत्रान्तिकानामप्यवयविद्रव्यं स्वावयवेभ्यः परमाणवादिभ्यो व्यतिरिक्तं प्रमाणेनानुपपन्नं कार्त्स्न्यैकदेशविकल्पप्रतिहतत्वात्। नह्येकस्मिन्नवयवेऽवयविनः कार्त्स्न्येन सम्भवः, अवयवान्तरेष्वसद्भावप्रसङ्गात्। न वा अंशेन, अवयविनोऽखण्डस्यैकरूपस्य अंशायोगात्, तदभ्युपगमेऽवयवानन्त्यप्रसङ्गाच्च। न वा व्यासज्यवृत्तिरवयवी, तस्यैकत्वेनानेकेषु वृत्तिरंशभेदकल्पनामन्तरेण न प्रतीतिपथमवतरति। किञ्च, परमाणुरेव यदि वस्तुसन् सम्भवेत् तदैवैतासां कल्पनानामवकाशः। न च परमाणुरेको निरंशः सिद्धिविषयतामानिह्नते। परमाणुभ्यः स्थूलप्रचयोत्पत्तिः परस्परसंयोगादेव सम्भवेत्। स च संयोगः षड्भ्यो दिग्भेदेभ्यः समुपनतानां परमाणूनां मध्यवर्तिना परमाणुना तदैव सम्भवेत्, यदि परमाणोः षड्भागाः सम्भवेयुः। अन्यथा यदि षण्णामेकदेश एव संयोगः स्यात्तदा परमाणुपरिमाणानाम-

नतिक्रमात् स्थूलोत्पत्तिरसम्भविनी। यदि भिन्नेष्वेवैकपरमाणुप्रदेशेषु षण्णां संयोगोऽभ्युपगम्यते तदा परमाणुः सावयवः प्रसज्येत।

भदन्तशुभगुप्तस्तु परमाणवः समुदिता उत्पद्यन्ते विनश्यन्ति च, अतस्तेषामेकज्ञानप्रतीतिः स्थूलतया। अविच्छिन्नसजातीयपरमाणुसङ्घाते स्थूलविभ्रमो जायते। स च मानसः। एतच्च शान्तरक्षितकमलशीलौ युक्त्यपेतं मन्येते। नहीयं भ्रान्तिर्मानसी स्पष्टतया प्रतिभासनात्। मानसी च प्रतीतिर्विकल्परूपा अवस्तुजन्या न स्पष्टतां बिभृयात्। न च देशवितानेन प्रतिभासमानाः परमाणवः स्वं स्वभावं जहति। तथा च अणुभ्यः स्थूलतोत्पत्तिः प्रमाणविरुद्धा कथं कल्पयितुं शक्येत। एकैकशः परमाणूनां न प्रतिभासः, अयोग्यत्वात्, नापि संहतानां सङ्घाताभावात्। तथा हि परमाणूनां संयुक्तत्वं नैरन्तर्यं सान्तरैः परिवारणं वा प्रचयोत्पत्तेर्निदानं कल्पनीयम्। न च दिग्भागभेदकल्पनामन्तरेण एकस्यापि कल्पस्य सम्भवः। अत एव प्रतिभासमानस्य स्थूलरूपस्यैकत्वमनेकत्वं चासिध्यत् तस्य मिथ्यात्वमेव परिशेषयति। अथ कथमसति प्राक्तने यथार्थे स्थूलप्रत्यये तत्संस्काराभावात्तद्विषयभ्रान्तिः सम्भवेदिति चेन्मिथ्याशास्त्रश्रवणादिजनितवासनापरिपाकाद् वातायनादिरेणुनिर्भासा बुद्धिरेव परमाणुकल्पनाया निबन्धनम्। स्थूलत्वभ्रान्तिश्च अनादिमिथ्यानुभवजनितवासनासमुद्भूतामयथार्थप्रतीतिं प्राक्तनीं कारणत्वेनानुभाषयितुं समर्था। भ्रान्तिकारणं संस्कारः पूर्वां प्रतीतिं कारणत्वेनापेक्षते, न प्रमितिम्। एतेनैव विचारेण सिद्धमेतद्यत्प्रतीयमानं वस्तु एकं न वा अनेकं किन्तु स्वप्नाद्यनुभूतवस्तुवन्मिथ्याभूतं प्रतीयत इति।

वसुबन्धुनोपस्थापितप्रमाणमुररीकृत्य धर्मकीर्तिनोक्तम्—"भावा येन निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः। यस्मादेकमनेकञ्च रूपं तेषां न विद्यते॥" (प्र० वा० असं० चि० २२७-३६०) इति। ननु स्थूलदृष्टिर्भ्रान्तिश्चेत्, सा च विद्यमानाविद्यमानयोः सादृश्यदर्शनोद्बुद्धसंस्कारजनिता अरजतात्मन्यपि शुक्तिकायां सादृश्यदर्शनाज्जायते। अत्र च कस्यचित्स्थूलस्य वस्तुनो याथातथ्येनादर्शनात् कथं तत्साधर्म्यावष्टम्भेन भ्रान्तिर्जायतामिति चेदुच्यते, सन्ति काश्चित्साधर्म्यदर्शनादभ्रान्तयः। या त्वविद्यासमुद्भूता सा वितथप्रतिभासिनी भ्रान्तिः साधर्म्यमनपेक्ष्यैव तैमिरादिप्रतीतिरिव प्रतिभासते। दोषोद्भूता चेयं स्थूलत्वप्रतीतिरनपेक्षितसाधर्म्यदर्शना प्रवर्तत इति किं नामानुपपन्नम् (प्र० वा० ३६१-६३)। धर्मकीर्तिना पुनर्ज्ञानस्वरूपनिरूपणेन दृग्दृश्यसम्बन्धमसम्भव-

पराहतं प्रदर्शयता बाह्यार्थे प्रमाणाभाव आपाद्यते। तथा हि ज्ञानमनाकारं साकारमन्याकारं वा भवद् बाह्यमर्थं प्रवेदयेत्। यदि ज्ञानं घटपटादिविषयभेदेऽप्यनाकारमेकरूपं स्यात्तर्हि इदं घटस्य ज्ञानं न पटस्येति प्रतिकर्मव्यवस्था नोपपद्येत। साकारमपि ज्ञानं विषयं गृह्णातीत्यपि कल्पना न श्रेयसी, यावता विषयस्य ज्ञाने स्वाकारसमर्पकत्वे न प्रत्यक्षं प्रमाणम्। नहि विषयाकारस्य ज्ञानाकारस्य च युगपत् संवेदनमानुभविकं तथात्वे वा विषयस्य स्वरूपतो दर्शनसम्भवे ज्ञानाकारकल्पना निष्प्रयोजना भवेत्, ज्ञानाकारस्य विषयदर्शनाभ्युपायत्वात्। अतो निराकारमिव साकारमपि ज्ञानं न बाह्यसद्भावे प्रमाणं भवितुं क्षमते। अन्याकारञ्च ज्ञानमन्यञ्च विषयं गृह्णातीति तु स्ववचनपराहतमेव। नहि रजताकारं ज्ञानं शुक्तिकायां प्रमाणमिति केनापि स्वस्थचेतसा अङ्गीक्रियते।

## विज्ञानस्य स्वप्रकाशत्वम्

नन्वेवं सति विज्ञानमप्यसिद्धं भवेद् ग्राहकाभावादिति चेत्? न, विज्ञानस्य ग्राहकानपेक्षत्वाद्विज्ञानं स्वयं प्रकाशमानं न कारणान्तरमपेक्षते। तथा चोक्तम्—"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते। इयमेवात्मसंवित्तिरस्य याऽजडरूपता॥" (त० सं० प० ५५६-२०००) इति। न च स्वप्रकाशत्वरूपे स्वसंवेदनेऽभ्युपगम्यमाने कर्तृकर्मविरोधः स्यात्, एकस्यैव ज्ञानस्य ग्राहकत्वे ग्राह्यत्वे च तदेव कर्तृरूपं तदेव च कर्मरूपं प्रसज्येत। न च कर्ता स्वक्रियायाः कर्म भवितुमर्हः, कर्मणः कर्तृजन्यक्रियाफलाश्रयत्वादिति वाच्यम्, "स्वरूपवेदना यान्यद् वेदकं न व्यपेक्षते। न चाविदितमस्तीदमित्यर्थोऽयं स्वसंविदः॥" (त० सं० पं० ५६२—२०१२) इति न कर्तृकर्मविरोधप्रसङ्गः। ज्ञानस्य स्वप्रकाशत्वं चित्सुखाचार्येण बलवतीभिर्युक्तिभिः प्रतिपादितम्। नैयायिकानां तथा माध्यमिकानां वैभाषिकाणाञ्च ज्ञानस्य स्वसंवेदनात्मकत्वेऽतिमहती विप्रतिपत्तिर्दृश्यते। ज्ञानस्य स्वप्रकाशत्वे विषयज्ञानयोर्नियमेन युगपत्प्रतीतिरङ्गीकर्त्तव्या। तथा च—"सहोपलम्भनियमादभेदो नीलतद्धियोः" इति धर्मकीर्तिमतमप्रतिहतं स्यात्। अत एव नैयायिकेन ज्ञानं निलीनमेव चक्षुरादिवद् विषयं प्रकाशयतीति पक्षः ससंरम्भं प्रतिपाद्यते। भट्टमीमांसकस्तु ज्ञानमप्रत्यक्षमेव केवलं ज्ञाततालिङ्गेनानुमानेन सिद्धं भवति, अतो विषयप्रकाशनकाले तस्य प्रतीतिर्दूरापेतेति प्रतिजानीते। अस्यां विप्रतिपत्तौ जयन्तभट्टवचनं स्मरणमुपयाति। ज्ञानेनैव

विषयसिद्धिस्तत्र ज्ञानस्वरूप एव विप्रतिपत्तौ—"प्रत्यक्षविषयेऽप्येताश्चित्रं विप्रतिपत्तयः। परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति॥ इदं भाति न भातीति संविद्विप्रतिपत्तिषु। परप्रत्यायने पुंसां शरणं शपथोक्तयः॥" (न्या० मं० ८१ पृ०) इति ज्ञानस्य स्वप्रकाशत्वसाधिका युक्तिः स्वानुभवमनपलप्य न निराकर्तुं शक्यते। अतिविस्तरेण न्यायादिनिबन्धेषु स्वप्रकाशत्वखण्डनमुपलभ्यते। नहि तस्य बहुधा चर्चितस्य पुनश्चर्चा विदुषां चेतसि चमत्कारमुत्पादयेत्। प्रत्युतातिविदितस्य प्रज्ञापनं वैरस्यायोपकल्पेत। संक्षेपेण तावदेतदुच्येत—यदि ज्ञानमप्रकाशं सद् विषयं प्रकाशयेदिति मतिस्तदा जडरूपाद् विषयात् कोऽस्य भेदः। नहि चक्षुरादिदृष्टान्ताः प्रकृते आञ्जस्येनोपयुज्यन्ते। नहीन्द्रियं साक्षाद्विषयं प्रकाशयति, किन्तु ज्ञानं जनयदेव। ज्ञानं तु न विषये कमप्यतिशयं जनयद् विषयप्रकाशने व्याप्रियते। ज्ञानमुत्पन्नमज्ञातम्, तद्विषयश्च ज्ञात इति तु स्ववचनविरुद्धं प्रतिभाति। अर्थवित्तौ व्यापृतं ज्ञानं नात्मानमृच्छतीति कुमारिलोक्तिर्नैयायिकादिभिः क्रियासमभिहारेण प्रतिध्वनितापि न प्रत्याययतीव। अर्थस्य संवित्तिरेव ज्ञानं तच्च स्वात्मनि शक्त्यभावं न व्यापिपर्तीति मतं नाङ्गीकर्त्तुं न वा निराकर्तुं कस्यापि सामर्थ्यम्। धर्मकीर्तिना तु—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" इति न्यायविनिश्चय उक्तम्। प्रमाणवार्त्तिके च—"सकृत् संवेद्यमानस्य नियमेन धिया सह। विषयस्य ततोऽन्यत्वं केनाकारेण सिध्यति॥" इति ज्ञानविषययोरेकवित्तिवेद्यत्वं प्रतिपादितम्। न च ज्ञानमज्ञातमेव विषयप्रकाशकमिति मतं समीचीनं प्रतिभाति। तथात्वे विषयस्मृतिकाले ज्ञानस्य स्मृतिर्न नियमेन भवेत्। अपि च, अज्ञातं ज्ञानम् असत्कल्पं न प्रमाणसिद्धं भवेत्। नहि प्रमाणमन्तरेण वस्तुनः सिद्धिः। ज्ञानं चेदज्ञातं स्यात् तदा अप्रामाणिकं ज्ञानं जातमिति न प्रमापयितुं शक्यम्। ज्ञानमज्ञातमजातं चेति तुल्यवद् भवेत्।

किञ्च, ज्ञानमनुव्यवसायेनैव ग्राह्यम्। येनैव चात्ममनःसंयोगेन विषयो गृहीतः, स एव चेज्ज्ञानग्रहणस्य सामग्री तदा अवश्यं ज्ञानं विदितं भवेत्, अन्ततोऽनन्तरक्षणे, ज्ञानयौगपद्यानङ्गीकारपक्षे। तथा च तत्क्षणे वा तदनन्तरक्षणे वा ज्ञानमवश्यं वेद्यमित्याख्यातं भवति। तत्र च क्षणविलम्बस्य शपथमात्रनिर्णेयत्वादनुव्यवसायेन स्वोत्पत्तिक्षण एव ज्ञातं न पूर्वमिति नासंदिग्धम्, स्वसमयानुरोधेनैव तदङ्गीकारात्। यदि पुनः प्रतिबन्धकाद् विषयान्तरसञ्चाराद् वा न तस्यानुव्यवसायो

नियमेनेत्यभिमन्यते, तदाप्रामाणिके व्यवसाये कथं सत्त्वनिर्णयः। "अथ या वित्तिर्न सानान्तरवेद्या सा प्रमाणाभावादसतीति तदधीनसत्त्वस्य विषयपर्यन्तस्यासत्त्वं स्यात्। न, कासाञ्चिद् बुद्धीनां स्मरणादिना लिङ्गेन विशेषतः, कासाञ्चित्तु ज्ञानत्वेन सामान्यलक्षणया प्रत्यासत्त्या ज्ञानात् प्रमेयमित्यादिवेदने च भानाच्च" (आ० वि० ६८५) इति यदुक्तं भगीरथठक्कुरेण तदपि न हृदयमावर्जयति। यदि स्मरणेन कस्यचिज्ज्ञानस्य सिद्धिस्तदा अस्मृतस्य ज्ञानस्य का गतिः? सामान्यलक्षणया प्रत्यासत्त्या प्रमेयमिति ज्ञानेन ज्ञानमात्रस्य ज्ञानं सिध्यतीति यदुक्तं तदपि नात्यन्तं प्रत्यायकम्। यावता प्रमेयत्वादिना सामान्येन सर्वं वस्तु शृङ्गग्राहिकया ज्ञायत इति न सुवचम्, तथात्वे एकज्ञानवत्त्वेन सर्वज्ञत्वापत्तिः खण्डनोक्ता दुर्निवारा भवेत्। अर्थानुभवजन्यया अर्थस्मृत्या विषयीकृतस्यार्थस्य स्वविषयकस्मृतिमनुत्पाद्य प्रतीतिर्जायते, तेन च स्मर्यमाणेनार्थेन तद्विषयकस्मृतेरनुमानं भवतीति व्याख्यानं न प्रत्ययमाधत्ते। अर्थः स्मर्यते न तु तस्य स्मृतिरिति विवादास्पदमेव। ईदृशं क्लिष्टव्याख्यानं मीमांसकानां श्रुत्यादिवाक्येषु दृष्टचरमप्यनुभवविषये नात्यन्तं सामञ्जस्यं बिभर्ति। फलतस्तु ज्ञानस्य विषयेन सहैव ज्ञानेऽङ्गीकृते यथा वस्तुव्यवस्था सुसमञ्जसा भवति न तथा ज्ञानज्ञानापह्नवे। किञ्च, सुखमुत्पन्नं स्वानन्तरोत्पन्नेन ज्ञानेन विषयीकर्त्तव्यम्। न चानन्तरभाविना ज्ञानेनावश्यं भवितव्यमिति नियमो नैयायिकानां सुवचः, सुखवज्ज्ञानस्याप्यवश्यवेद्यत्वापातात्। किञ्च, सुखे जाते तदनन्तरोत्पत्तिकं ज्ञानं यदि केनचित्प्रतिबन्धकेन नोत्पद्येत तदा सुखमज्ञातमेवावतिष्ठेत। सुखं चाज्ञातमजागलस्तनायमानमुत्पन्नं सत् किं वा कुर्यात्। सुखदुःखानुभवार्थमेवादृष्टमङ्गीक्रियते। अज्ञातं सुखं दुःखं वा उत्पादयददृष्टं निष्फलमेव भवेत्, निष्फलञ्चादृष्टं स्ववचनविरुद्धम्। अनया च कल्पनया अदृष्टस्य धर्मिग्राहकमानसिद्धं फलाविनाभावित्वं व्याहन्यते। किञ्च, सुखमुत्पन्नं द्वितीय एव क्षणे व्यवसीयमानं तृतीये क्षणेऽनुव्यवसातव्यम्। यदि पुनः प्रतिबन्धकवशादनुव्यवसायस्यानुत्पत्तिस्तदा व्यवसितमपि सुखं ममैव सुखमिति परिज्ञानाभावात्परकीयसुखवत् न ज्ञातुरुपकुर्यात्। उत्पन्नमेव सपदि सुखं गृह्यते ज्ञानेनेति कथमनुत्पन्नान्न विशिष्यत इति चेत्? तर्हि दीयतां ज्ञानेऽपि प्रसन्ना दृष्टिः। किञ्च, ज्ञानजन्याया इच्छायाः कृतेश्च स्वरूपसत्याः फलोपधायकत्वे जडयन्त्राच्चेतनस्येच्छादिमतो न कोऽपि विशेषः प्रतीयेत। सुखं चेच्छति

तदर्थञ्च प्रयतते न तु जानाति, अहमिच्छामि प्रयते वा इति त्वतीव क्लिष्टकल्पनम्। अपि च, चरममात्मज्ञानं मोक्षसाधनमज्ञातमेव विपर्ययादिकं विनाशयति। न च तस्यानुव्यवसायः, तत्रापि प्रसङ्गस्य तादवस्थ्यात्। ईदृशस्य सर्वथाऽज्ञातस्य तत्त्व-साक्षात्कारस्याप्रमाणसिद्धस्य कथं सत्ता साधनीया। "चरमं ज्ञानमनुद्भूतमेवोत्पद्यते" (आ० त० वि० ६८३) इति शङ्करमिश्रवचनं विस्मयमुत्पादयति। येन च ज्ञानेनोत्पद्यमानेन सर्वविपर्ययनिवृत्त्या संसारनिवृत्तिः सञ्जाघटीति, तदेव ज्ञानमनुद्भूत-मिति न श्रद्धेयं वचः।

कथं तावदेतावान् प्रयासो ज्ञानस्य परप्रकाश्यत्वस्थापने आलम्बितो नैयायिकेन। यदि सहोपलम्भनियमं परिहर्तुकामेनैतदनुष्ठितं तदा—"अहो वत इमे केभ्यो बिभ्यतः श्रोत्रियाः परं किमपि वैक्लव्यमुपागताः" इति जयन्तवचनमेव 'श्रोत्रियाः' इत्यस्य स्थाने 'तार्किकाः' इति पदं निक्षिप्य नैयायिकेभ्य उपहरामः। सहोपलम्भनियमश्च यदि भवेद् भवतु नाम। न तावता ज्ञानविषययोरभेदोऽवश्यन्तया निगमनीयः, जाति-व्यक्त्योः सहोपलम्भनियमेऽप्यभेदासिद्धेः। किञ्च, ज्ञानस्य स्वसंवेदने कर्तृकर्मविरोधो नैयायिकैर्नापादनीयः, ज्ञानस्य गुणत्वेन क्रियात्वाभावात्। वैयाकरणानामेवेयं प्रक्रिया, न च सा सर्वत्र वस्तुगतिमनुरुणद्धि। नैयायिकानामपि नहि ज्ञानत्वावच्छेदेन पर-प्रकाश्यत्वम्, ईश्वरज्ञानस्य स्वप्रकाशत्वाङ्गीकारात्, अन्यथेश्वरस्यासर्वज्ञत्वापत्तेः। न च उदयनाचार्यस्य मते स्वप्रकाशत्वाङ्गीकारे ज्ञानस्य स्वभावहानिरिति शङ्कनीयम्। "आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः। श्राद्धोऽसि चेदुपनि-षदः पृच्छ। मध्यस्थोऽसि चेत्, अनुभवं पृच्छ। नैयायिकोऽसि चेत्, न वैषयिक-सुखज्ञानस्वभाव इति निश्चिनुयाः" (आ० त० वि० ६३२) इति स्वयं उदयनाचार्यो नात्यन्ताय स्वप्रकाशत्वपक्षमपहस्तयति।

## विषयताविचारः

ननु भवतु ज्ञानं स्वप्रकाशं वा परप्रकाशं वा, तस्य खलु केनचिद्विषयेण भवि-तव्यम्। विषयस्य ग्राह्यत्वं ज्ञानस्य ग्राहकत्वमिति विषयविषयिभावलक्षणः सम्बन्धो न शक्यापह्नवः, ज्ञानस्य सविषयकत्वनियमात्। अनयोश्च सम्बन्धो विषयताख्यः। सा च विषयता किं ज्ञानविषययोः स्वरूपसम्बन्धः? तथात्वेऽतीतानागतयोर्विषयत्वा-

नुपपत्तिः, तयोरसत्त्वात्। अथ किन्निष्ठं तावद् विषयतानियामकम्। रूपं बाह्यं पारमार्थिकं ज्ञानं चानित्यमिति येषां पक्षस्तेषां नैयायिकानां मते ज्ञाननिष्ठमेव-तदङ्गीकर्त्तव्यम्। ये च साकारज्ञानवादिनस्तेषां सांख्यवेदान्तिनां मते ग्राह्यनिष्ठमेव नियामकम्, अन्यथा ज्ञाननिष्ठत्वे सर्वदैव घटं जानामीत्यनुव्यवसायप्रसङ्गात्। स चानिष्ठः, विषयभेदानुभवस्य स्फुटमुपलब्धेः। न्यायमते तु ज्ञाननिष्ठो विषयविषयिभावः। स च—"प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः" इत्युदयनाचार्यः। तदीयता च ज्ञानीयता ज्ञानसम्बन्धितेति यावत्। ज्ञानस्यैव स्वभावविशेषो विषयता। ज्ञानमुदयमानं विषयमुल्लिख्यैवोदयते, न कदापि विषयानुल्लेखि ज्ञानं सम्भवति। ईदृशश्च स्वाभाविकः सम्बन्धो न ज्ञानविषयोभयनिष्ठः, तदुभयस्वभावनिरूपित इत्यङ्गीकर्त्तुं शक्यम्, विषयस्यातीतानागतरूपस्याविद्यमानत्वेऽपि तदुपलब्धेः। अतो ज्ञानस्वभाव एव विषयविषयिभावः कक्षीकर्त्तव्यः। अथ स्वभाव इति कोऽर्थः? यदि स्वस्य भावो धर्मः स्वभावस्तदा ज्ञानस्य धर्मो घटत्वादीत्यभ्युपगम्यमाने साकारज्ञानवादे प्रवेशापत्तिः। स्व एव भाव इति निरूप्यमाणे विषयस्य ज्ञानात्मनि प्रवेशाद् ज्ञानस्वभावानतिरेकाद् विज्ञानवादाङ्गीकारप्रसङ्गो दुरावाधः। किञ्च, तदीयत्वं विषयसम्बन्धित्वं यदि ज्ञानस्यैव धर्मो भवेत्तर्हि घटो ज्ञानविषय इत्यभिलापो नोपपद्यते, विषयताया ज्ञाननिष्ठत्वादेव घटनिष्ठत्वाभावाच्च। अथ विषयस्यैव विषयतास्वभावः स्यात्तर्हि ज्ञानमनपेक्ष्यैव विषयग्रहणं प्रसज्येत। न वा ज्ञानविषयोभयनिष्ठः स्वरूपसम्बन्ध एव विषयतेति मन्तव्यम्, तथात्वेऽयं पुरुषः किञ्चिज्जानाति, अयञ्च घट इति ज्ञानस्य घटस्य च ज्ञाने जाते तत्रायं घटं जानाति न वेति वस्तुतो घटज्ञानवति पुरुषे ज्ञायमाने संशयो न समुदियात्, उभयोर्ज्ञानघटयोः स्वरूपस्य ज्ञानात्। अथ तयोर्न संश्लिष्टतया ग्रहणमिति घटज्ञानस्वरूपयोर्ज्ञाने सत्यपि घटज्ञानवानयमिति धीर्नोदेतीत्युच्येत, तदा विषयताख्यः सम्बन्धो न गृहीतः सत्यपि सम्बन्धस्वरूपग्रहणे इत्युक्तं भवेद् भङ्ग्यन्तरेण। अतो विषयताख्यं धर्मान्तरमङ्गीकर्त्तव्यम्। अयमेव च रघुनाथशिरोमणेः सिद्धान्तः। तन्मते विषयता पदार्थान्तरम्, तद्विशेषाः प्रकारताविशेष्यतादयस्तथैव व्याख्येयाः। सप्तपदार्थीवादिनां वैशेषिकाणां प्रसिद्धिमनुरुध्य तेषां ज्ञाने वा विषये वान्तर्भावः क्लिष्टकल्पनया न साधनीयः। न च सर्वसम्बन्धानामन्ततो गत्वा स्वरूपसम्बन्धे पर्यवसानाद् विषयताया अपि तथात्वाद्

अतीतानागतयोः स्वरूपतोऽभावात् कथं विषयताख्यस्तयोः सम्बन्धो भवेदिति शङ्कनीयम्, विषयतादीनां वृत्त्यनियामकसम्बन्धत्वात् तस्य च समकालिकसम्बन्धिसत्तानपेक्षणात्। तादृशसम्बन्धानङ्गीकारे स्वस्वामिभावादिव्यवहारो विसंस्थुलो जायेत। यदपि सांख्यवेदान्तमते विषयताया ज्ञाननिष्ठत्वे घटं जानामीति सार्वदिकानुव्यवसायप्रसञ्जनं कृतम्, तदपि तेषां सिद्धान्तं विरुणद्धि। नहि नित्यचैतन्यवादिनां स्वरूपभूतं चैतन्यं विषयमवगाहत इति पक्षः सम्प्रतिपन्नः, वृत्तिज्ञानानामेव सविषयत्वाभ्युपगमात्। वृत्तिरूपज्ञानानामन्तःकरणपरिणामानां क्षणिकत्वमेव तैरास्थीयते, यथा नैयायिकानामात्मविशेषगुणभूतानामिति कः प्रतिविशेषः? वेदान्तिमते विषयताख्यः सम्बन्धोऽनिर्वचनीयस्तत्त्वान्यत्वाभ्यामनिरूपणार्हत्वात्। सांख्यानां च मते यद्यपि ज्ञानचैतन्ययोः सम्बन्धः प्रकाश्यप्रकाशकरूपः, तथापि कोष्ठगत्या तस्यौपचारिकत्वादाध्यासिकत्वमेव पर्यवस्यति। अलं प्रसक्तानुप्रसक्त्या।

भगीरथठक्कुरस्तु ज्ञानस्वरूपमेव विषयत्वं मन्यते। न च ज्ञानस्वरूपस्य सर्वविषयसाधारण्यान्न विषयप्रतिनियमः सिद्ध्येदिति शङ्कनीयम्, भिन्नं भिन्नं ज्ञानस्वरूपं भिन्नभिन्नविषयत्वं क्रोडीकृत्यैव प्रादुर्भवति, तेन न घटज्ञानस्य पटविषयत्वम्। घटसम्बन्धित्वस्य विषयत्वस्य तज्ज्ञानत्वस्य चैकस्मिन् ज्ञानस्वरूपेऽन्तर्भावः, ज्ञानत्वस्य घटविषयत्वस्य च ज्ञानरूपैकधर्मिनिष्ठत्वात्। तथा च घटज्ञानस्वरूपमेव घटविषयत्वम्। ज्ञानस्वरूपाणां भेदेऽपि विषयतायामनुगमो ज्ञानत्वनिबन्धनः, ज्ञानमात्रस्य सविषयकत्वात्। अयं च निष्कर्षः—यथा ज्ञानस्य ज्ञानत्वं स्वरूपम्, एवं विषयत्वमपि। अस्यां तु कल्पनायां बहवः खलु संशया अहमहमिकया समुद्भवन्ति। ज्ञानत्वं विषयत्वञ्च यदि ज्ञानस्वरूपमेव, तर्हि तयोः कीदृशः सम्बन्धः। किं तयोरभेदः, तथात्वे विज्ञानवादे प्रवेशो दुष्परिहरः। अथ विषयत्वं व्याप्यं ज्ञानत्वं व्यापकं तदा विषयप्रतीतिकाले ज्ञानस्य प्रतीतिरवर्जनीया। यत्र विषयत्वं तत्र ज्ञानत्वमिति व्याप्तौ सिद्धायां विषयग्रहणे ज्ञानग्रहणमपरिहरणीयमेव। अथ विषयत्वमेव व्यापकं ज्ञानत्वं व्याप्यं तदा ज्ञानत्वं विहायापि विषयत्वस्य सम्भवे कथं विषयत्वं ज्ञानस्वरूपं स्यात्। नहि ज्ञानं ज्ञानत्वं विहाय सम्भवमासादयेत्। विषयत्वं ज्ञानत्वं विना ज्ञानत्वं च विषयत्वं विना न प्रतिपत्तिपथमवतरेत्। तथा च धर्मकीर्तिमतादविशेषः। यथोक्तं तेन—

नार्थोऽसंवेदनः कश्चिदनर्थं वाऽपि वेदनम् ।
दृष्टं संवेद्यमानं तत् तयोर्नास्ति विवेकिता ।। इति ।
(प्र० वा० २३५)

अर्थोऽनुभवमन्तरेण न कश्चिद् दृष्टः, वेदनञ्च अर्थं विना न दृष्टं संवेद्यमानम् । तस्मात्तयोरर्थतदुपलम्भयोर्विवेकिता नास्तीति ज्ञानविषययोरव्यतिरेकित्वं धर्मकीर्तेरिव भगीरथस्यापि सम्प्रतिपन्नं भवेत् । अथोभयोः परस्पराविनाभावेन प्रतीतयोरपि नाभेदो जातिव्यक्तिवद् गुणद्रव्यवद्वा स्वरूपभेदेऽपि एकवित्तिविषयत्वं न त्वभेद इत्यास्थीयते, तदा ज्ञानमज्ञातं सदेव विषयस्य प्रकाशकमिति मतप्रतिष्ठापने कथमागृह्यते नैयायिकैः । विषयताख्यपदार्थान्तरस्वीकारेण तयोर्भेदो यद्यपि सूपपादस्तथापि तं परित्यज्य ज्ञानस्वरूपे विषयतामन्तर्भावयितुं नव्यनैयायिकानां प्रयासो विज्ञानवादं प्रत्यासन्नीकरोति । अतो बाह्यपदार्थरक्षणपरैरस्मिन् नव्यमतेऽतितरामभिनिवेशो न कार्यः । ज्ञानविषययोः स्वाभाविकः सम्बन्धः समवायरीत्या न खल्वनुपपादनीयः ।

## क्षणिकविज्ञानवादः

नव्यविज्ञानवादप्रस्थाने दिङ्नागधर्मकीर्तितदनुयायिभिः प्रवर्तिते क्षणिकमेव विज्ञानं सन्तन्यमानं स्थिरत्वविभ्रममुपजनयति, विषयश्च ज्ञानादव्यतिरिक्तः— "विज्ञप्तिमात्रमेवेदं त्रैधातुकम्, तच्च विज्ञानं प्रतिसत्त्वसन्तानभेदादनन्तमविशुद्धञ्चानधिगततत्त्वानाम्, विशुद्धं च प्रहीणावरणानां प्रतिक्षणविशरारु च सर्वप्राणभृतामोजायते" (त० सं० ५५०) इति प्रतिपाद्यते । अत्र त्रयो विषया विचारणीयाः— आद्यो विज्ञानं क्षणिकमिति, द्वितीयः सन्तन्यमानतया अनन्तमिति, प्रतिसत्त्वसन्तानं विज्ञानानां भेद इति तृतीयः । विज्ञानानां क्षणिकत्वं सौत्रान्तिकप्रवर्तितं क्षणभङ्गवादमवष्टभ्यैव प्रतिपादनीयम् । अर्थक्रियाकारित्वं सत्त्वमिति सिद्धे क्षणभङ्गवादस्य कथमपि प्रतिष्ठा भवेदपि । अर्थक्रियाकारित्वस्य च पूर्वमेवास्माभिः सत्त्वलक्षणत्वमपहस्तितम् । अर्थक्रियाया भ्रान्तेऽपि विज्ञाने दर्शनाद् भ्रमस्य च असत्ख्यातिरूपतया अन्यत्र सती अर्थक्रिया भ्रमविषयिणी भवतीत्यन्यथाख्यातिवादिनां मतमाश्रित्य यथार्थावगाहित्वं सौत्रान्तिकैर्विज्ञानवादिभिर्वा नाङ्गीक्रियते । अतस्तन्मतानुसारेणासत्या

अपि अर्थक्रियायाः सम्भवात्तदवष्टम्भेन विज्ञानस्य क्षणिकत्वं दुःसाधमेव। विज्ञानानामपि परस्परं भेदो विषयभेदमादायैव सम्भवेत्। विषयाश्च न वस्तुसन्तः सम्भवन्ति यथा सौत्रान्तिकैर्मन्यन्ते। सौत्रान्तिकानां मते यद्यपि विषयाः साक्षाज्ज्ञानेन नाधिगम्यन्ते तथापि ज्ञाने स्वाकारं समर्पयन्ति। तत्तदाकारदर्शनञ्च तत्तद्विषयदर्शनमित्यनुभवितॄणामध्यवसायः। अस्मिंस्तु विज्ञानवादिदर्शने वाह्यविषयाणामसद्भावे प्रतिपादिते आकारद्वारेण वाह्यविषयज्ञानं भवतीत्यसम्भवदुक्तिकमेव। आकारास्तु वासनासमुद्भवा विज्ञाने प्रतिभासन्ते। वासनाश्च पूर्वप्रतीतिजन्या विज्ञानसन्ताने आधीयन्ते। तासाञ्च कालेन परिपाकवशात्तथा तथा विषयाकारेण प्रादुर्भावो भवति। आकारास्तु न सन्तः, विज्ञानस्य ज्ञानज्ञेयात्मकद्वैरूप्याभावात्। यदि आकारा वस्तुसन्तो भवेयुस्तर्हि एकस्यैव ज्ञानस्य नानारूपावभासिनो नानात्वं स्यात्। तथा चोक्तम्—"अन्यथैकस्य भावस्य नानारूपावभासिनः। सत्यं कथं स्युराकारास्तदेकत्वस्य हानितः॥" इति (प्र० वा० २२६)। यदि आकारा असन्त एव तर्हि तैः कथं ज्ञानस्य परस्परं भेदः सम्पाद्येत, यदि तेऽकिञ्चिद्रूपा अलीका भवेयुस्तदा ज्ञानं केन विशेष्यताम्। अथ अलीका अपि भेदका भवन्तु। यथा नैयायिकानां सत्त्वेनाविशिष्टानामप्यलीकानां नीलपीतादिरूपेण भेदः स्यादिति चेत्? तत्किं नीलपीतादयोऽलीकाद्भिन्नाः? तर्हि अनलीका भवेयुः। अथ अभिन्नाः, तदा कथं तेषां ज्ञानभेदकत्वम्। नह्यलीकैरापाद्यमानो भेदोऽनलीको भवितुमर्हति। तथा चाकाशेन कृतो ग्रन्थिराकाशेनैव मोचित इत्याभाणकविषयतां नातिवर्तेत। न च विचारासहत्वात् तेषामलीकत्वमध्यवसीयत इति वाच्यम्, प्रतिज्ञैकदेशत्वाद्धेतोः। यदेव विचारासहं तदेवालीकं तुच्छमित्युच्यते। नहि किञ्चिद्रूपं नीलादि, अथ च विचारासहमित्युक्तेऽपि संभवः। एवमाकाराणामसत्त्वे ज्ञानभेदाभावः। सत्त्वे च ज्ञानादाकाररूपस्य ग्राह्यस्य भेद इति विज्ञानाद्वैतसिद्धान्तहानेस्तत्परिहारार्थम्—"प्रविश अनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्दममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे" इत्युदयनाक्षेपो वज्रलेपायेत। तथा च ग्राह्यस्य ग्राहकाद् भेदाभेदाभ्यामनिर्वाच्यत्वान्न तेन ग्राहकज्ञानस्य वास्तवो भेदः शक्यसम्पादः। ग्राह्याणां नीलधवलादीनां भेदं विना न ज्ञानानां प्रतिनियततद्विषयकाणां भेदः सिद्धयेत्। तथात्वे औपनिषदसिद्धान्तस्य 'एकमेवाद्वितीयं ब्रह्म' इत्यद्वैतपरस्यैवोपादेयत्वम्, न तु विज्ञानभेदवादस्य

बौद्धकल्पितस्य युक्तिविरुद्धस्य। तथा चोक्तमुदयनाचार्येण- "न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः। नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥" ( आ० त० वि० ५२६ ) इति।

भवतु नाम स्थिरविज्ञानसिद्धिस्तथा च नित्यात्मसिद्धौ आत्मदर्शिनो मोक्षाभावः। तथा हि—आत्मदर्शी तदुपकारिणि रज्यते, तदपकारिणञ्च विद्वेष्टि। रागद्वेषौ च संसारस्य मूलम्, यस्तु नैरात्म्यदर्शी तस्य न कोऽप्युपकारी न वा अपकारी, अतो न तस्य रागद्वेषौ स्तः। अतो नैरात्म्यमेव भावनीयमिति चेदुच्येत, अनात्मदर्शिनो मुमुक्षुत्वाभावात्। नहि आत्मानमप्रतिसन्धाय कश्चित् सुखावाप्तये दुःखहानाय वा प्रयतते। आत्मन एव स्वर्गापवर्गकामनया प्रवृत्तिनिवृत्तिमार्गावलम्बनम्। इयं प्रत्युत नैरात्म्यदृष्टिर्नास्तिक्यमेव द्रढयेत्। तथा च देहात्मवादिनो लोकायतिकस्यैव सर्वत्र विजयः स्यात्। न च दुःखहेतुत्वादिन्द्रियादिवदसौ आत्मापि हीयतामिति चेत्? उच्यते—यादृशो दुःखहेतुस्तादृशो हेय एव, देहाद्युपाधिमांश्च तथा। निरुपाधिश्च आत्मा कथं हीयताम्, अशक्यत्वान्निष्प्रयोजनत्वाच्च। नहि तस्य विनाशो नित्यत्वात्। नापि विप्रयोगो विभुत्वात्। नापि ज्ञानाभावद्वारेण, यथा यथा तदर्थं यत्नस्तथा तथा ज्ञानस्यैवानुवृत्तेः। तथा हि—न रागद्वेषौ आत्मनिबन्धनौ। अनात्मानं देहमेव आत्मानं मन्यमानोऽतत्त्वदर्शी तदनुकूलेषु रज्यते प्रतिकूलेष्वपरज्यते। न चैतत्केवलमात्मदर्शिनः सम्भवति, निरुपाधेः पुत्रवित्तैषणायाः समुत्थानात्, तैरनुपकार्यत्वाच्च। ततोऽनात्मन्यात्मग्रहो निदानं संसारस्य। तत्त्वज्ञानेन मिथ्याज्ञाने निवृत्ते सति संसारस्य तत्कारणाभावान्निवृत्तिः। अतो नैरात्म्यवादः केवलमविचारितवस्तुतत्त्वस्य वैराग्यातिशयप्रवर्तितः।

## विज्ञानवादप्रक्रिया

वसुबन्धुकृतत्रिंशिकायां विज्ञानवादप्रक्रिया इत्थं व्युत्पादिता—विज्ञानमेव तत्त्वम्। तस्य त्रिविधः परिणामः—विपाकः, मननम्, विषयविज्ञप्तिश्चेति। तत्र विपाक आलयविज्ञानं सर्वबीजकं सर्ववासनानां तत्रैव आलीयमानत्वात्। तच्च आलयविज्ञानं न एकं नित्यं किन्तु विज्ञानपरिणामभूतोऽनादिकालिकः प्रवाहः। तच्च क्षणिकमेव, परिणामस्य क्षणिकत्वात्। परिणामश्च अन्यथात्वं कारणक्षणनिरोधसमकालस्त-

क्लिलक्षणकार्यस्यात्मलाभलक्षणः। तत्रैव आत्मादिविकल्पवासनापरिपोषाद् रूपादिविकल्पवासनापरिपोषाच्चालयविज्ञानाद् आत्मादिविकल्पः, रूपवेदनादिस्कन्धविकल्पश्च तत एवोत्पद्यते। आलयविज्ञानात् तदालम्बनं मनोविज्ञानम् आत्मदृष्टयात्ममोहात्ममानात्मस्नेहसंज्ञितैः क्लेशैरनुविद्धमुद्भवति। तृतीयस्तु परिणामः षड्विधस्य रूपशब्दगन्धरसस्प्रष्टव्यधर्मात्मकस्य षडिन्द्रियगोचरस्य यैवोपलब्धिस्तदात्मकः। एते च विकल्पा न वस्तुसन्तः, किन्तु परिकल्पिता एव। तथा चोक्तम्—"आध्यात्मिकं बाह्यं यावद् बुद्धधर्माः सर्वं तत्परिकल्पितस्वभावमेव" इति। परतन्त्रस्वभावस्तु हेतुप्रत्ययजन्यः। परिनिष्पन्नो भावस्त्वविकारी सर्वकालं ग्राह्यग्राहकादिकल्पनारहितः। स एव परमार्थः, आकाशवदविकारित्वात्, विमलत्वात्, एकरूपत्वाच्च। सर्वकालं तथाभावस्तथतेत्युच्यते। तत्र परिकल्पितो वेदान्तिनां प्रातिभासिकस्थानीयः, परतन्त्रश्च व्यावहारिकस्थानीयः, परिनिष्पन्नस्तु पारमार्थिकस्थानीयः। अस्मिन्नेव शुद्धविज्ञानमात्रत्वे सत्त्वस्यावस्थितिर्निर्वाणमुच्यते। संसारश्च आ आलयविज्ञानाद् आ च विषयविज्ञप्तेः प्रवर्तते। आलयविज्ञानं सांख्यप्रोक्तमहत्तत्त्वस्थानीयम्, मनोविज्ञानमहङ्कारस्थानीयम्, प्रवृत्तिविज्ञानानि च षड्विधज्ञानेन्द्रियज्ञानस्थानीयानि। आलयविज्ञानञ्च विज्ञानपरिणामेत्युक्तम्, परिणामश्च क्षणिकः सांख्यीयप्रकृतिपरिणामवत्। यत्परिणामोपादानभूतमाद्यं विज्ञानमुक्तम्, तच्च पौर्वकालिकमालयविज्ञानरूपमेवेत्यस्माकं प्रतिभाति। नहि परिनिष्पन्नस्वभावस्य तथतालक्षणस्याऽविकारिणो ग्राह्यग्राहकरहितस्याद्वयस्य विज्ञानस्य क्षणिकपरिणामोऽन्यथाभावलक्षणः सम्भवति, तस्य सर्वकालमविकारित्वात्, सर्वविधक्लेशादिदोषास्पृष्टतया विद्यमानत्वाच्च। परिणामस्तर्हि ईदृशस्य नित्यस्य एकरूपस्य विवर्तरूप एवाध्यवसातव्यः, अतत्त्वतोऽन्यथाभावात्। विज्ञप्तिमात्रतायामवस्थानमेव सर्वकल्पनाविवर्जनान्निर्वाणम्। तस्य खलु स्वरूपमेवं निरूपितं वसुबन्धुना—

"अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्। आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः॥ स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः। सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः॥" इति।

अतिगम्भीरार्थमेतच्छ्लोकद्वयं व्याख्यागम्यमिति स्थिरमतेर्व्याख्यानुसारेण वर्णयामः। ग्राहकाभावादचित्तः, ग्राह्याभावादनुपलम्भः, निर्विकल्पत्वाल्लोकादुत्तीर्णं

ज्ञानमिति लोकोत्तरं ज्ञानम्। आश्रयस्य आलयविज्ञानस्य दौष्ठुल्यविपाकवासनाद्वय-विरहेणाद्वयज्ञानभावेन परावृत्तिलक्षणश्च। शुद्धविज्ञानस्यैव सर्वविज्ञानपरिणामेष्वनुगमात् क्लेशावरणलक्षणस्य ज्ञेयावरणलक्षणस्य च दौष्ठुल्यप्रहाणादियमाश्रय-परावृत्तिर्लभ्यते। स एव चानाश्रवो धातुराश्रयपरावृत्तिरूपः। अनास्रवश्च दौष्ठुल्यहानात्, आर्यधर्महेतुत्वाच्च धातुशब्दवाच्यः, अचिन्त्यस्तर्कागोचरत्वात्, प्रत्यात्मवेद्यत्वात्, लौकिकदृष्टान्ताभावाच्च। कुशलश्च अनाश्रवत्वात्, ध्रुवो नित्यत्वाद् अक्षयतया। सुखञ्च नित्यत्वादेव, यदनित्यं तद्दुःखम्, अयञ्च नित्य इति। विमुक्तकायः क्लेशावरण-प्रहाणात्। महामुनेर्धर्मकाय आश्रयपरावृत्तिलक्षणः क्लेशज्ञेयावरणप्रहाणात्।

अयञ्च धर्मकायः किं प्रतिसत्त्वसन्तानं भिन्नः, आहोस्विदेकमेव तत्त्वं सर्व-सत्त्वसाधारणभूतमौपनिषदब्रह्मवदिति विचारमपेक्षते। महायानसूत्रालङ्कारे आचार्या-सङ्गप्रणीते परमार्थतत्त्वमित्थं निरूपितम्—"न सन्न चासन्न तथा न चान्यथा न जायते व्येति न चावहीयते। न वर्धते नापि विशुध्यते पुनर्विशुध्यते तत्परमार्थ-लक्षणम्॥" (म० सू० २२)। अद्वयार्थः परमार्थः, परिकल्पितपरतन्त्रलक्षणाभ्यां परिनिष्पन्नस्य एकत्वाभावात्। न चान्यथा ताभ्यामेवान्यत्वाभावात्, परिकल्पित-परतन्त्रयोस्तदधिष्ठानेनैवात्मलाभात्। यथा वेदान्तनये प्रातिभासिकव्यावहारिकयोः। न जायते न च व्येतीत्यसंस्कृतत्वाद् धर्मधातोर्वृद्धिर्व्ययाभावश्च, संक्लेशव्यवदाना-वस्थयोर्निरोधोत्पादयोस्तदवस्थत्वात्। नित्यशुद्धस्य हि कथं वा क्लिष्टत्वं कथं वा विशुद्धिः; प्रकृत्या असंक्लिष्टत्वात्। आगन्तुकक्लेशविगमाद् विशुद्ध्यतीव। न चात्र आत्मदृष्टिः, सा च पञ्चोपादानस्कन्धानुपादाय प्रवर्तते। भ्रम एवायं या आत्मदृष्टिः, तादृशभ्रमक्षय एव मोक्षः। न तु कश्चित् परमार्थतो बध्यते मुच्यते वा। "सर्वधर्माश्च बुद्धत्वं धर्मो नैव च कश्चन", सर्वधर्माश्च बुद्धत्वम्, तथताया अभिन्नत्वात्। बुद्धत्वस्य च न कश्चिद्धर्मोऽस्ति, परिकल्पितेन धर्मस्वभावेन शुक्लधर्ममयं च बुद्धत्वमुच्यते। "यथाम्बरं सर्वगतं सदामतं तथैव तत्सर्वगतं सदा-मतम्। यथाम्बरं रूपगुणेषु सर्वगं तथैव तत्सत्त्वगणेषु सर्वगम्॥" (म० सू० ३६-१५)। बुद्धत्वस्य सर्वगत्वमाकाशसाधर्म्येणात्र प्रदर्शितम्, सत्त्वगणेषु सर्वगतत्वं बुद्धत्वस्यात्मत्वेन सर्वसत्त्वोपगमेन च परिनिष्पत्तितो वेदितव्यम्। एतेनैकमेव बुद्धत्वं तथतारूपं सर्वसत्त्वगतं प्रतिपन्नं भवति। नैरात्म्यस्वरूपञ्चेत्थं विवृतम्—"शून्यतायां विशुद्धायां

नैरात्म्यान्मार्गलाभतः। बुद्धाः शुद्धात्मलाभित्वाद् गता आत्ममहात्मताम् ॥" (म० सू० ३७, २३)। अनाश्रवे धातौ नैरात्म्यं विशुद्धा तथता बुद्धानामात्मा स्वभावः, अतः शुद्धात्मलाभित्वाद् बुद्धा आत्ममाहात्म्यं प्राप्ताः। अनेन सर्वजीवाधिष्ठानभूतं सर्वप्रपञ्चाश्रयभूतञ्च आत्ममाहात्म्यमुद्भावितम्। अथ यदि बुद्धो मोक्षे आत्ममाहात्म्यं लभते, तर्हि कथं भवति तथागतो मरणाद् भवति वा न भवति वेति प्रश्नेऽव्याकृतनयः समाश्रितो बुद्धेनेति। अत्र प्रतिविधीयते—बुद्धत्वं न भावः, पुद्गलधर्माभावलक्षणत्वात्, बुद्धत्वस्य जीवधर्मत्वाभावात्। नापि बुद्धत्वमभावस्तथतालक्षणभावात्। अतोऽव्याकृतमेतदित्युक्तम्। नहि बुद्धत्वं प्राप्तः शाक्यमुनिर्जीवविशेषो भवति, तद्घटकानां पञ्चोपादानस्कन्धानां विगमात्। नाप्यभावं प्रतिपद्यते, तथतालाभात्। तथता चैकमेव तत्त्वम्। ईदृशं च नैरात्म्यव्याख्यानमौपनिषदब्रह्मवादेन सर्वथा तादात्म्यमाविष्करोति। इयञ्च तथता सर्वजीवसाधारणीति स्वकण्ठेनैवोक्तम्—

"सर्वेषामविशिष्टापि तथता शुद्धिमागता। तथागतत्वं तस्माच्च तद्गर्भाः सर्वदेहिनः॥"

इति (म० सू० ४०–३७)।

सर्वेषां निर्विशिष्टा तथता तद्विशुद्धिस्वभावश्च तथागतः। अतः सर्वे सत्त्वास्तथागतगर्भा उच्यन्त इति विचारेणाद्वैततत्त्वमेव विज्ञानानां निर्विचिकित्सं प्रतीतिगोचरो भवति। अपि च बुद्धबहुत्वमपि नेष्यते, बुद्धानां धर्मकायस्याभेदादनाश्रवे धाताविति। पुनश्च या परिकल्पितेन स्वभावेनाविद्यमानता सैव परमा विद्यमानता परिनिष्पन्नेन स्वभावेन। यश्च सर्वथाऽनुपलम्भः परिनिष्पन्नस्य स्वभावस्य स एव परम उपलम्भः परिनिष्पन्नस्वभावस्येति च स्पष्टं शून्यताया निराकरणं विज्ञानाद्वैतस्य च सुस्पष्टं प्रतिपादनं दृष्टं भवति। मध्यान्तविभागटीकायां विज्ञानं भावरूपमेव ग्राह्यग्राहकशून्यत्वाच्छून्यमुच्यते, न तु सर्वथाभावरूपम्। एवं स्थिते यत्खलु दिङ्नागधर्मकीर्तिप्रवर्तिते विज्ञानवादे विज्ञानं क्षणिकम्, क्षणिकानां विज्ञानानां परस्परं भेदः, प्रतिसत्त्वसन्तानञ्च विज्ञानभेदः सिद्धान्तीकृतः, स च सिद्धान्तः प्राचीनसिद्धान्तं विरुणद्धि; अथ चायमेव सौत्रान्तिकवासनाप्राबल्यादौपनिषदसिद्धान्तप्रद्वेषाद्वाऽर्वाचीनैर्बौद्धदार्शनिकैः शान्तरक्षितज्ञानश्रीरत्नकीर्तिपर्यन्तैरहमहमिकया व्युत्पादितः। एतस्यार्वाचीनस्यैव विज्ञानवादस्य सप्रपञ्चं खण्डनं दार्शनिकान्तरैरनुष्ठितम्, न तु प्राचीनस्य विज्ञानवादप्रस्थानस्य।

भगवान् शङ्कराचार्यः—"नासतो विद्यते भावो नाभावो विद्यते सतः" इत्यस्य गीताश्लोकस्य भाष्ये सत्त्वासत्त्वयोर्विनिगमकं प्रमाणमुपन्यस्य शून्यवादं प्रत्याचख्यौ। असतोऽविद्यमानस्य सकारणस्य कारणव्यतिरेकेणानुपलब्धेरसत्त्वं सिध्यति। यत्स्वभावेन सत् तत्कदापि सत्त्वं न विजहाति। "एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः" इति ब्रह्मसूत्रतर्कपादभाष्ये सत्त्वलक्षणमाचक्षाणस्तमेव सिद्धान्तं द्रढयति। अभ्यासेन निरूप्यमाणं वस्तु तात्पर्यगोचरो भवतीति शास्त्रविदां मतम्। कार्यञ्चोत्पत्तिप्रध्वंसाभ्यां प्रागनन्तरञ्चानुपलब्धेरसदित्यवसातव्यम्। नागार्जुनोऽपि सर्वं प्रतीत्यसमुत्पन्नं वस्तु शून्यमिति प्रतिपादयाञ्चकार। कारणस्यापि कारणान्तरोत्पन्नत्वादसत्त्वे प्राप्ते सर्वाभावप्रसङ्ग इति चेत्? न, सदसद्विभागो हि बुद्धितन्त्रः। तत्र यद्विषया बुद्धिर्व्यभिचरति तदसत्, यद्विषया च बुद्धिर्न व्यभिचरति तत्सदिति निरूपणीयम्। सर्वत्र च विषये द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे। न च यथा नीलोत्पलमिति सामानाधिकरण्ये नीलत्वमुत्पलं विहायान्यत्र दृष्टम्, उत्पलञ्च नीलत्वं परित्यज्य वर्णान्तरं परिगृह्णद् दृश्यते, नैवं सद्बुद्धिर्व्यावर्तते। नागार्जुनाच्छङ्कराचार्यस्यायमेव सुमहान् भेदो यन्नागार्जुनेन सर्वमसत्प्रख्यातीति निरूप्यते, न तथा शङ्कराचार्येण। सर्वत्रैव हि भ्रमे सत्यानृते मिथुनीकृत्यैव विषयस्य प्रतीतिर्भवति। न हि सत्तामविषयीकृत्य किमपि प्रतीयते नाम।

एवं सदसद्विभागव्यवस्थायां किं सत्किमसदिति निर्णयोऽन्वयव्यतिरेकाभ्यामीषत्करो भवति। तथा हि सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्रैव विशिष्टबुद्धिरोजायमाना उपलभ्यते। तत्र घटबुद्धिविषयोऽसन्न तु सद्बुद्धिविषयोऽव्यभिचारादिति व्यवसातव्यम्। घटे विनष्टे सद्बुद्धिर्नोपलभ्यत इति तस्यापि व्यभिचार इति चेत्? न, सद्बुद्धिर्विशेषणविषया घटादिविशेष्याभावे न समुदाचरद्वृत्तितां लभत इति न तस्य व्यभिचारः शङ्कनीयः। वस्तुतस्त्वभावस्याधिकरणस्वरूपत्वात् तदनतिरेकाच्च नष्टेऽपि घटेऽनुत्पन्ने वा कपालादिविषया सद्बुद्धिस्तत्राप्यनुवर्तत एवेति न कुत्रापि सत्ताबुद्धेर्व्यभिचारः। तस्मात् सत्ता वस्तुमात्रस्य स्वभाव इत्यकामेनाप्यभ्युपेतव्यम्। अथ कथमसता विशेष्येण सत्तायाः सामानाधिकरण्यबुद्धिः संभवेदिति चेत्, सदसतोर्मिथुनीकृत्य प्रतीतेः सार्वत्रिकत्वात्। सद्रूपस्य आत्मनस्तु सर्वत्राव्यभिचारान्न कदाप्यसत्ता शक्यशङ्का। एवं ज्ञानस्यापि कुत्रापि न असत्त्वम्, ज्ञानं नास्तीत्युक्तिः स्वज्ञान-

विरुद्धा, इदं न जानामीत्युक्तिवत्, यथा यथा ज्ञानस्याभावे प्रयत्नस्तथा तथा ज्ञानस्यैव प्रतीतेः। मयि ज्ञानाभाव इत्युक्तिरपि ज्ञानेनैव संभाव्यते, अभावज्ञानस्य सद्भावात्। उक्तञ्च पञ्चदश्याम्—"सर्वबाधे न किञ्चिच्चेद् यन्न किञ्चित्तदेव तत्" इति, "शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते" इति च। एवं ज्ञानस्य परमार्थसत्ता नापह्नोतु शक्या। अथ सत्ता च ज्ञानञ्चेति किं वस्तुद्वयमुताहो एकमेव ? नाद्यः, तथात्वे सत्तायाः सिद्धिर्ज्ञानाधीनैव वक्तव्या, ज्ञानविषयत्वे तस्या अनिर्वाच्यत्वप्रसङ्गात्, विषयस्य ज्ञानाद् भेदाभेदाभ्यामनिर्वाच्यत्वेन मिथ्यात्वात्। न च सत्ता मिथ्येति वक्तुं शक्यम्, बाधाभावादव्यभिचाराच्चेति प्रदर्शितं प्राक्। तर्हि सत्तैव केवला तत्त्वमस्तु किं ज्ञानेन तत्त्वान्तरेणेति चेन्न, ज्ञानाभावे सत्ताया एवासिद्धेः। ज्ञानमेव तर्ह्येकं तत्त्वमास्ताम्, न, तस्य सत्ताविरहेऽसत्त्वप्रसङ्गात्। अतः सत्ता ज्ञानञ्चेत्यद्वैतम्। तस्य नित्यत्वेनापरिच्छिन्नत्वेनात्मनो निरुपाधिकप्रेमविषयत्वेन च श्रुतिप्रामाण्येन चानन्दरूपत्वमङ्गीकर्तव्यमेव। अतः प्रामाणिकैः शून्यवादसिद्धान्तोऽपहस्तित औपनिषदसिद्धान्तश्च स्वहस्तितः। दृष्टश्चास्माभिर्नैयायिकस्यापि सत उदयनाचार्यस्याद्वैतमते पक्षपातः। न च तद्व्याख्यातॄणां मतमनुरुध्योदयनाचार्यस्य औपनिषदसिद्धान्ते समादरो व्याजमात्रमिति तात्पर्यवर्णनेनोदयनाचार्यस्य कापटिकत्वमुद्घोषणीयमिति शम्॥

---

# बौद्धन्यायविमर्शः

डॉ॰ सातकडिमुखर्जी, नालन्दास्थपालिशोधसंस्थानसंचालकः ।

दिङ्नागाचार्येण प्रमाणसमुच्चयादिकान् बहून् ग्रन्थान् विरच्य्य अक्षपादप्रणीतन्यायसूत्रस्य वात्स्यायनप्रणीभाष्यस्य च बहुशो दूषणाभिधानेन बौद्धन्यायशास्त्रस्य सम्प्रदायः प्रवर्तितः । तदनन्तरकालिकेन उद्योतकरेण वसुबन्धुदिङ्नागाचार्यकृतदूषणानां नागार्जुनादिशून्यवादिभिः प्रमाणप्रमेयादिकमधिकृत्य ये खलु आक्षेपाः कृतास्तेषां च खण्डनार्थं वात्स्यायनभाष्यस्य वार्त्तिकं प्राणायि । उक्तञ्च तेन ग्रन्थारम्भे—"यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद । कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ॥" इति । प्रतिवादिनामग्राहं कुत्रापि तेषां दूषणानां खण्डनं न विहितमुद्द्योतकराचार्येण । वाचस्पतिमिश्रेण तात्पर्यटीकायामेतदैतिहासिकं रहस्यं समुद्भिन्नम्—"यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयते" इति । स्वयञ्च—"ग्रन्थव्याख्याच्छलेनैव निरस्ताखिलदूषणा । न्यायवार्त्तिकतात्पर्यटीकाऽस्माभिर्विधास्यते ॥" इति ब्रुवतार्वाचीनैर्धर्मकीर्तिशान्तरक्षितप्रभृतिभिः प्रतिसमाहितानामुद्योतकरदूषणानां प्रतिविधानार्थं तात्पर्यटीकाया विरचनं कृतमित्यभिव्यञ्जितम् । प्राचीनभारतवर्षस्य शास्त्ररचनाशैलीमपरिचिन्वन् एतेषां व्याख्यातॄणां व्याख्यापरम्परारहस्यं नाववोद्धुं क्षमेत कश्चिद् आधुनिकरीतिमात्रमवगच्छन् । नहि इमा व्याख्यापरम्पराः केवलं मूलग्रन्थार्थानुसन्धाने एव व्याप्रियन्ते, अपि तु यैः खलु विरोधिदार्शनिकप्रस्थानमनुरुन्धानैर्न्यायसिद्धान्ते समाक्षेपा गुरुशिष्यसम्प्रदायक्रमेण समुद्भावितास्तेषां प्रतिविधानार्थमेव एतासां, संरम्भः । उद्योतकरप्रोक्तानां कुमारिलभट्टोद्भावितदूषणानाञ्च धर्मकीर्तिप्रभृतिभिर्निरसनं कृतम्, अतस्तत्प्रतिसमाधानार्थं वाचस्पतिमिश्रेण तात्पर्यटीका रचिता । सा पुनर्ज्ञानश्रीरत्नकीर्तिप्रभृतिभिः परीक्ष्य खण्डिता । तेषाञ्च खण्डनानां निराकरणार्थमुदयनाचार्येण परिशुद्धिनाम्नी टीका

रचिता, अन्ये च न्यायकुसुमाञ्जलिबौद्धधिक्कारापरपर्यायात्मतत्त्वविवेकादयः स्वसिद्धान्तरक्षणतात्पर्येण व्यरचिषत। बहवः खलु न्यायशास्त्रे ग्रन्थकर्त्तारः प्रादुरभवन्। परन्तु तेषां ग्रन्थाः कालमाहात्म्याद् अस्मद्दौर्भाग्याच्च कालकवलीभूताः। केवलं तत इतो बौद्धदार्शनिकैरनूदितानि वाक्यानि समुपलभ्य तेषां सत्ता अनुमानमात्रविषयतां भजते। न केवलं बौद्धदार्शनिकग्रन्थानां विलोपः समजनि, अपि तु वैदिकमार्गानुयायिनां परःसहस्रा ग्रन्थाः कालधर्ममुपागताः। क्वचिच्च नामशेषत्वं विप्राणाः क्लिश्नन्ति विविदिषूणां चित्तानि। नैतच्चित्रं यदतिविपुलव्यवसायशालिनामपि प्राचीनशास्त्रपरिज्ञानं साधनाभावाद् एकदेशदर्शितादोषं नातिक्रामति।

एतत्तु सर्वथा असंशयितमेव यत् खलु यावत्पर्यन्तं बौद्धा विद्वांसो न्यायमीमांसादिदर्शनानामपाकरणार्थं ग्रन्थं व्यरचयन् तावत्पर्यन्तमास्तिकदार्शनिकानामपि क्रियासमभिहारेण ग्रन्थादीनां रचनमविच्छिन्नप्रवाहेण प्रावर्तिष्ट। खृष्टद्वादशशतकानन्तरं तुरुष्कदेशीयानां साम्राज्ये प्रतिष्ठिते भारतवर्षाद् बौद्धधर्मावलम्बिनां विद्रावणे कृते तेषाञ्च शास्त्राणां विप्रलोपे सम्पादिते वैदिकदार्शनिकचिन्तापि निरिन्धनानलवद् निःसपत्नताबोधजनितमालस्यमौदासीन्यञ्च प्राप्ता नवतत्त्वाविष्करणेऽनीशा संवृत्ता। नव्यन्यायप्रस्थाने गङ्गेशोपाध्यायोपक्रमे केवलं गुरुमतस्यैव ससंरम्भं परीक्षणं कृतम्। बौद्धादीनां मतखण्डने मृतमारणन्यायेन प्रयासमप्रयोजनमध्यवसाय स्वयूथ्यैर्विवाद एव तेषां पुरुषकारः पर्यवसन्नोऽभूत्। कथं वा प्रतिरोधिनामभावे आत्मसंरक्षणार्थं प्रयत्नः संभवेत्। अधुनातनानां विदुषां तु तत्तन्मतपरिज्ञानार्थं प्रयतमानानामपि चिन्ताशक्तिर्जीवद्रूपप्रतिद्वन्द्विनामभावे परिपोषकाष्ठामनधिगच्छन्ती केवलं स्वपरचित्तरञ्जनार्थतामेव संपिपादयिषति। न केवलमस्माकं भारतीयानामेवैतादृशी दशा समुदपादि, किन्तु चीनभोटजापानादिदेशवास्तव्यानां बौद्धपण्डितानां भारतीयबौद्धपण्डितानां साहायकमलभमानानां दार्शनिकी चिन्ता केवलं प्राचीनसिद्धान्तगवेषणायां पर्यवसिता नवीनं तत्त्वमनाविष्कुर्वती कथमपि ध्रियमाणा न सम्प्रतितनानां दार्शनिकानां चमत्काराय सामर्थ्यमुद्भावयति। आशास्थानमेतद् यत् पुनरपि भारते वर्षे विश्वविद्यालयेषु तदर्थं प्रतिष्ठितासु नानासंस्थासु च बौद्धशास्त्राणां परिशीलनं पुनः प्रवर्त्यमानं दृश्यते। बौद्धसमयानुसारि-

देशेभ्यो पण्डिता विद्यार्थिनश्च समागच्छन्ति, भारतीयाश्च तैः सार्धं सामरस्यमनुभवन्तो भारतवर्षस्य प्राचीनमैश्वर्यमुपलभन्ते । यदि भोटचैनिकभाषादिषु रक्षितानां बौद्धशास्त्राणां पुनर्भारतीयभाषायां प्रत्यापत्तिः संघटेत तदा बौद्धशास्त्रचिन्ता वैकल्यं परिहृत्य साकल्यं समासादयिष्यति ।

अधुना प्रमेयाणां बाहुल्यात् तेषां च परीक्षणस्य ग्रन्थबाहुल्येनैव शक्यसम्पादनत्वान्न तेषां विचारोऽत्र चिकीर्ष्यते। केवलं कतीनाञ्चिदत्रोपन्यासः क्रियते विविदिषूणां जिज्ञासोत्तम्भनार्थम् । दिङ्नागकृतः प्रमाणसमुच्चयोऽद्यत्वे नोपलभ्यते। भोटभाषातः संस्कृतभाषायां तच्छाया संपिपादयिषितापि प्रामाणिकव्याख्यादिविरहेण सम्प्रदायविच्छेदाच्च न निःसंशयितां व्युत्पत्तिमाधातुमीष्टे । अतो धर्मकीर्तिकृताश्चतुःपञ्चा ग्रन्था एवास्माकमुपजीव्या भवन्ति तदर्थप्रतिपत्तौ । इन्द्रियादेः प्रामाण्यमवधूय ज्ञानस्यैव प्रमाणतामभ्युपयन्ति बौद्धप्रमाणशास्त्रप्रणेतारः । प्रमाणस्य च सामान्यलक्षणमविसंवादकत्वमेव प्रतिपादितम् । तच्च वात्स्यायनेनैव न्यायभाष्ये समुट्टङ्कितमादिवाक्येन—"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" इत्यालक्षणेन। "प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः । अविसंवादनम् ।" इति प्रमाणवार्त्तिके धर्मकीर्तिना प्रमाणसामान्यलक्षणं निरटङ्कि । विसंवादो वञ्चनं तद्योगाद् विसंवादि तद्भिन्नमविसंवादि ज्ञानं प्रमाणमित्युक्तं भवति । भ्रान्तं हि ज्ञानं यथावस्थितं वस्तु अन्यथा प्रदर्शयद् विसंवादयति प्रतिपत्तारम् । तथा च प्रवृत्तेरसामर्थ्यादिदं ज्ञानमयथार्थमिति व्यवसीयते । किं तावदविसंवादनमित्याकाङ्क्षायामाह—अर्थक्रियास्थितिरविसंवादनम् । अर्थक्रियास्थितिश्च न केवलं प्रवृत्तिसामर्थ्येन निवेद्यते, अपि तु प्रवृत्त्यभावेऽपि तद्योग्यार्थप्रदर्शनेनैव प्रामाण्यं निर्व्यूढं भवति । व्याख्यातं चैतद् धर्मोत्तरेण—"प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते ज्ञानम् । पुरुषं प्रवर्तयज्ज्ञानं प्रमाणीभवति । प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव । तथा च यदि ज्ञानादर्थं परिच्छिद्यापि न प्रवर्तते पुरुषः, प्रवृत्तो वा कुतश्चित् प्रतिबन्धादर्थक्रियां नाधिगच्छति तदपि प्रमाणम्, प्रमाणयोग्यतालक्षणस्य अविसंवादस्यापरिहाणात् । तथा च प्रवृत्तिसामर्थ्यं वात्स्यायनप्रोक्तं सुस्थितं भवति । प्रवृत्तिसामर्थ्येन च तद्योग्यता विवक्षिता । अथ प्रवृत्त्यभावे अर्थक्रियाप्राप्तावसत्यां कथं प्रमाणयोग्यतावसाय इति चेदुच्यते, अभ्यस्तविषयेऽसत्यामपि प्रवृत्तौ विषयज्ञानं निरस्तविभ्रमाशङ्कमुपजायमानं स्वतः प्रमाणतया

अध्यवसीयते। एवमनुमानस्य साध्यव्याप्तहेतुदर्शनजन्यस्य स्वत एव प्रामाण्यं निश्चीयते। अर्थक्रियासंवादज्ञानञ्च स्वभावतः संशयविपर्ययशङ्कां व्युदस्यत् स्वत एव प्रमाणमिति निश्चीयते। अनभ्यासदशायां प्रवृत्तिसामर्थ्यज्ञानाधीनमेव प्रामाण्य-ज्ञानम्। प्रमाणस्य खलु व्यापारोऽर्थपरिच्छेदादेव समाप्यते। प्रवृत्तिस्तु अर्थित्व-सामर्थ्यादिहेत्वन्तरापेक्षा बहिरङ्गैव तस्य प्रामाण्यपरिच्छित्तावानुकूल्यं सम्पादयति। "अत एव चानधिगतविषयं प्रमाणम्"। येनैव हि ज्ञानेन प्रथममधिगतोऽर्थः, तेनैव प्रवर्तितः पुरुषः, प्रापितश्चार्थः। तत्रैव चार्थे किमन्येन ज्ञानेनाधिकं कार्यम्? "अतोऽ-धिगतविषयमप्रमाणम्" इति धर्मोत्तरेणोक्तम्। एतच्च न तस्य स्वकपोलकल्पितं किन्तु प्रमाणवार्त्तिकवचनमनुरुध्यैव। "अज्ञातार्थप्रकाशो वा" इति प्रमाणलक्षणं वार्त्तिक-कारोक्तमनुरुन्धानेन प्रमाणलक्षणमनधिगतार्थविषयकमविसंवादकं ज्ञानं पर्यवसायितं धर्मोत्तरेण। यदि केवलमविसंवादनमेव प्रमाणलक्षणं भवेत्तदा निर्विकल्पकपृष्ठ-भाविनो विकल्पस्य शाब्दज्ञानस्य च प्रामाण्यमङ्गीकर्त्तव्यं स्यात, तच्च नाङ्गीक्रियते। उक्तञ्च हेतुबिन्दौ—"यदाद्यमसाधारणविषयंदर्शनं तदेव प्रमाणम्" इति तत्पृष्ठभाविना विकल्पेन पूर्वप्रदर्शितस्यार्थस्यैव प्रकाशकेन न क्वाप्यर्थक्रिया सम्पाद्यते, अतः सवि-कल्पस्य सत्यपि प्रवृत्तिसामर्थ्ये ज्ञातस्यैव ज्ञापकत्वान्न प्रामाण्यम्।

अनुमानं तर्हि न प्रमाणं भवितुमर्हति, सविकल्पकरूपत्वात्। सत्यम्, सर्वमेव सामान्यं न काञ्चिदर्थक्रियां सम्पादयति, सामान्यस्यावस्तुत्वाद् विकल्पमात्रगोचर-त्वादेव। यद्यपि सामान्यमनुमानविकल्पग्राह्यम्, तथापि—"तत् कारणव्यापकसम्बद्ध-लिङ्गनिश्चयद्वारायातं सम्बद्धसम्बन्धादनधिगतार्थक्रियासाधनविषयामर्थक्रियामुप-कल्पयतीति तद्विषयो विकल्पः प्रमाणम्" (हे० वि० टी० सा० वि० २६)। अत एव यद्यपि साध्यं सामान्यमनर्थभूतं तथापि तस्मिन्नर्थाध्यवसायेन प्रवृत्तस्य पुरुषस्य स्वलक्षणप्राप्तिर्भवति, स्वलक्षणस्य हेतोः स्वलक्षणभूतकारणव्यापकाभ्यां सम्बद्ध-त्वादित्यनुमानमपि प्रमाणमाख्यायते। प्रत्यक्षस्यापि प्रामाण्यमर्थाव्यभिचारनिबन्धन-मनुमानस्यापि प्रतिबद्धहेतुजन्यत्वादर्थाविनाभावित्वात् प्रत्यक्षवत्प्रामाण्यमप्रतिहतमेव। अत एव प्रत्यक्षमनुमानञ्चेति ग्रन्थकारोक्तः—"चकारो प्रत्यक्षानुमानयोस्तुल्यबलत्वं समुच्चिनोति। यथाऽर्थाविनाभावित्वादर्थं प्रापयत् प्रत्यक्षं प्रमाणम्, तद्वदर्थाविना-भावित्वादनुमानमपि परिच्छिन्नमर्थं प्रापयत् प्रमाणमिति" (न्या० बि० टी०

४०)। शाब्दं ज्ञानं तर्हि प्रमाणं भवतु, न, शब्दस्य स्ववाच्येनार्थेनाविनाभावाभावात्। विवक्षायामेव तस्य प्रामाण्यान्न शब्दस्यार्थतत्त्वनिबन्धनं प्रामाण्यं संभवति। किञ्च, गृहीतग्रहणादपि न शब्दस्य प्रामाण्यम्। एवं प्रत्यक्षानुमानोभयानुगतमविसंवादकमनधिगतार्थविषयकं ज्ञानं प्रमाणमिति सामान्यलक्षणं निर्व्यूढं भवति। एतेन या च आधुनिकव्याख्यातृभिः प्रत्यक्षानुमानोभयानुगतलक्षणानुपपत्तिरुद्भाविता सा प्रतिव्यूढा वेदितव्या। अथ कथं सविकल्पकं ज्ञानं न प्रमाणीभवेदिति प्रश्ने एतद् वक्तव्यम्—अभ्युपगतप्रमेयस्वभावमनुरुध्य प्रमाणलक्षणं दार्शनिकैरुद्भावितम्। बौद्धानां मते क्षणिकं निर्धर्मकं स्वलक्षणं व्यक्तिरूपं वस्तुसत् तत्त्वम्, सामान्यं विकल्पसिद्धमवस्तुसत्। अतस्तदवगाहि ज्ञानं न प्रमाणम्। अद्वैतवेदान्तिनां निर्धर्मकं ब्रह्मैव परमार्थसद्वस्तु। अत एव तद्ग्राहकं प्रत्यक्षं न सप्रकारकं भवितुमर्हति। नैयायिकानां तु गुणकर्मसामान्यविशेषादीनां वस्तुसतां द्रव्याविनाभूतानां प्रत्यक्षेण ग्रहणं भवत्येव; परन्तु विशिष्टज्ञाने विशेषणज्ञानं कारणमिति न्यायानुरोधेन प्रथमं विशेषणविशेष्ययोर्ज्ञाने सत्यपि तदनन्तरभाविविशिष्टज्ञानं सविकल्पकात्मकं विशेषणविशेष्यसम्बन्धावगाहिरूपं जायते। उभयमप्यविशेषेण प्रमाणम्, विशेषणस्य विशेष्यस्य तत्सम्बन्धस्य च वस्तुतो विद्यमानस्य सविकल्पकेन व्यवसायात्मकेन गृहीतत्वात्। मीमांसकस्यार्हतस्य च सामान्यविशेषात्मकं वस्तु। अस्माद्धेतोः प्रत्यक्षमुपजायमानमुभयग्राहकमुपजायते। यद्यपि प्रथमं बालमूकादिज्ञानसदृशमालोचनात्मकं ज्ञानमुत्पद्यत इति भट्टस्य मतम्, तथापि न तेन ज्ञानेन व्यवहारः सिद्ध्यति, किन्तु जात्यादिविशिष्टतया व्याक्रियमाणेन। प्राभाकरा रामानुजीया माध्वाश्च प्रथमत एव सप्रकारकं ज्ञानमुत्पद्यमानमभ्युपगच्छन्ति। सामान्यादीनां विशेष्येण सहैव एकेन्द्रियग्राह्याणां सतामपि कथं न प्राथमिकेनैव प्रत्यक्षज्ञानेन ग्रहणं स्यात्, योग्यताया अविशेषात्। यस्तु विशेषणज्ञानं विशिष्टज्ञानं प्रति कारणमिति नैयायिकानामभ्युपगमः, स तु भिन्नेन्द्रियग्राह्ये विशेषण एव संगच्छते। तस्मात् सविकल्पकमेव प्रत्यक्षं प्रथमत एवोत्पद्यत इति प्राभाकराणां सिद्धान्तः। वस्तुतस्तु यस्य खलु यादृशं प्रमेयस्वरूपं तदनुरुध्यैव प्रमाणस्य लक्षणं तत्तत्सम्प्रदायविद्भिः प्रवर्तितम्। सौत्रान्तिकानां मते सर्वं वस्तु स्वलक्षणम्, न तु तत्र किमपि सामान्यं संभवतीति तन्मते निर्विकल्पकमेव प्रत्यक्षं वस्तुग्राहि न त्वन्यत्।

कार्यं स्वभावोऽनुपलम्भश्चेति हेतुत्रयमङ्गीकृतं दिङ्नागाचार्येण तदनुवर्तिना धर्मकीर्तिना च। तत्राद्यौ द्वौ वस्तुसाधनौ, तृतीयस्तु प्रतिषेधहेतुः। कार्यस्य कारणाव्यभिचारित्वात् स्वभावस्य च साध्यायत्तत्वात् तयोरविनाभावः सिद्धः। "कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥" (प्र० वा० ३५, २६८) इत्यविनाभावनिबन्धनद्वयं तदुत्पत्तितादात्म्यरूपं प्रोक्तम्।

अतः कार्यकारणभावस्तादात्म्यं चेति द्वयमेवाविनाभावनिबन्धनमन्यद्वेति विचारो नात्र प्रस्तूयते, बहु वक्तव्यत्वात्। एतद्द्वयमेवाविनाभावाङ्गं भवतु, साध्याविनाभावी च हेतुः साध्यसिद्धौ समर्थो नान्यः। एवं सति कार्यं स्वभावश्चेति हेतुद्वयमेव साध्याविनाभावि सिध्यति। अनुपलब्धिस्तु कथं साध्यसिद्धेरङ्गं भवेत्, अविनाभावस्य तन्निबन्धनस्यादर्शनात्। तथा सति कार्यं स्वभावोऽनुपलम्भश्चेति हेतुत्रितयोक्तिरपि कथं संगच्छताम्, इति चेत्, उच्यते—अनुपलब्धेः स्वभावहेतावन्तर्भावाद् द्वयस्यैवाविनाभावनिबन्धनस्योक्तौ नानुपलब्धेरगमकत्वमाशङ्कनीयम्। हेतुत्रितयोक्तिस्तु साध्यस्वरूपभेदमादाय प्रवृत्ता। कार्यस्वभावौ विधिसाधनौ, कार्यस्य गमकत्वे वीजं कारणाविनाभावित्वम्। स्वभावस्य च साध्यस्वभावत्वमेव। अनुपलब्धिस्तु प्रतिषेधहेतुरेव। तथा च विधिप्रतिषेधात्मकं साध्यभेदद्वयमादायानुमानस्य द्वैविध्यं प्राप्तं सत् पुनर्विधिसाधनस्य कार्यकारणभावस्वभावरूपनियामकभेदादवान्तरभेदद्वयेन सम्भूय त्रयो हेतवः प्राप्ताः, द्वौ विधिसाधनौ कार्यस्वभावरूपौ, प्रतिषेधहेतुश्चानुपलब्धिरिति हेतुत्रितयोक्तेः साध्यस्वरूपभेदमूलकत्वात्, अविनाभावमूलकत्वाभावात्। अविनाभावनिबन्धनञ्च द्वयमेवेति न काचिदनुपपत्तिः। अत्र द्वावेव वस्तुसाधनावित्यवधारणं न तु वस्तुसाधनावेवेति, सामर्थ्याद् व्यवच्छेदस्यापि सिद्धेः। वस्तुतस्तु उपलब्धिलक्षणप्राप्तिरुपलभ्यवस्तुस्वभाव इति तद्भावोऽपि सामर्थ्यात् स्वभावभूत एव। एवं कार्यकारणभावेऽपि कारणाभावात् कार्याभावानुमाने कार्याभावाद्वा अप्रतिवद्धसामर्थ्यकारणाभावानुमाने कार्यकारणभाव एव व्याप्तिनिबन्धनम्। एवमभावे साध्ये न तदतिरिक्तव्याप्तिनियामकापेक्षा। अस्मिन् प्रसङ्गे स्वभावहेतावाक्षेपः कृतो नैयायिकादिभिः। तत्र किञ्चिद् वक्तव्यमवशिष्यते। स्वभावहेतौ साध्यसाधनयोरभेदात् कथं शिंशपात्वेन वृक्षानुमानम्, नह्यभिन्नेषु प्रतिबन्धः संभवति। न च शिंशपा वृक्षात्मिका, खदिरादिभ्यो व्यावर्तमानत्वात्। तदात्मत्वे प्रत्युत लिङ्गग्रहणेनैव

साध्यस्य ज्ञानमव्यतिरेकात् सिध्येत्। अतो न स्वभावो हेतुः। अत्रोच्यते–शिंशपा हि वृक्षविशेषस्वभावः, वृक्षविशेषोऽपि शिंशपास्वभावः। अतस्तदुभयगतं तादात्म्यं वर्तत एव। सत्यपि तादात्म्ये यदि मोहात् कश्चित् शिंशपात्वमवगच्छन्नपि वृक्षात्मकत्वमस्य नाध्यवस्यति तं प्रति तदनुमानं प्रयुज्यते मोहव्यावर्तनार्थमेव। न वृक्षत्वस्य शिंशपां प्रति गमकत्वं यतः शिंशपा न वृक्षमात्रस्वभावा। सर्वञ्च गणितशास्त्रे रेखागणितशास्त्रे चानुमानं स्वभावहेतुतामाश्रित्यैव प्रवर्तमानं दृश्यते। किञ्च, गुणत्वेन द्रव्यत्वे साध्ये स्वभावहेतुकमेवानुमानं पुरस्करणीयम्।

अधुनाऽनुपलब्धिलिङ्गेनाभावसाधने कुमारिलभट्टेन बहूनां दोषाणां प्रसञ्जने कृते प्रत्युच्यते—यदभावो नानुमीयते, किन्तु दृश्यानुपलम्भेनाभावव्यवहार एव साध्यते। अनुपलब्धिलिङ्गेनाभावे साध्येऽनुपलब्धेरप्युपलब्ध्यभावत्वाद् उपलब्ध्यन्तराभावरूपेणानुपलम्भान्तरेण तस्याः सिद्धिः संभाव्यते। तथा च तस्य तस्यानुपलम्भस्योपलब्ध्यभावेन साध्यत्वेऽनवस्था दुष्परिहरा स्यात्। अथोपलम्भाभावो नान्येन सिध्यति, केवलं यदि स्वसन्ताने ज्ञानं स्यादुपलभ्येत, अनुपलम्भादसदेव तदिति स्वत एवोपलम्भाभावः सिद्ध इष्यते, तदा स इवाऽभावोऽपि सिद्धः स्यादिति नानुपलब्ध्याऽभावसिद्धिः सम्पाद्या। यद्यन्यस्य घटविविक्तभूतलस्योपलब्ध्या घटानुपलब्धिसिद्धिरिति मतं तदा प्रत्यक्षसिद्धैव घटानुपलब्धिः। तथा च घटभूतलयोरेकज्ञानवेद्ययोर्यदा भूतलमात्रग्राहकं ज्ञानं भवति तदा स्वस्य घटग्राहकत्वाभावं निश्चाययद् घटानुपलब्धिरूपमेवानुभूयते। घटानुपलब्धिश्च घटाभावोपलब्धिः। एवं सति घटाभावसिद्ध्यर्थं नानुपलब्ध्याख्यं प्रमाणान्तरं न वानुपलब्धिलिङ्गकमनुमानमपेक्षणीयम्, तस्य प्रत्यक्षसिद्धत्वात्। प्रत्यक्षेण दृश्यस्य भावानिश्चय एवाभावनिश्चयः। तथा च यथोपलब्ध्यभावः प्रत्यक्षसिद्धः, एवमर्थाभावोऽपि प्रत्यक्षसिद्ध एव। अनुपलब्धिलिङ्गेन किं तावत्साध्यमिति चेदुच्यते, अभावव्यवहार एव तत्साध्यः, अतो नानर्थक्यम्। यद्यप्युपलम्भयोग्यानां पदार्थानामनुपलब्धिरेव तेषामसत्ता नान्या, एवं सिद्धेऽपि प्रत्यक्षेणाभावव्यवहारस्य विषये मोहात् तदभावमप्रतिपद्यमानः पुरुषो दृश्यानुपलब्धिलिङ्गेनाभावप्रदर्शनेन तद्व्यवहारे प्रवर्त्यते। व्यवहारश्च ज्ञानमभिधानं हानोपादानरूपा च निःशङ्का प्रवृत्तिः। अथ यदि दृश्योऽपि घटादिरत्र स्यादवश्यमुपलभ्येत, तत्संसर्गिभूतलोपलम्भेन तत्प्रत्यक्षकारणसाकल्येऽवसिते तदुपलम्भस्य

तत्सत्त्वेऽनिवार्यत्वात्। उपलम्भाभावे च तदभावः सिध्यन् कथं संशयविपर्यययोर्विषयः स्यात्? उच्यते, यथा कश्चन मूढमतिः शावलेये गोव्यवहारं पश्यन् बाहुलेये गवि शावलेयरूपाभावाद् गोव्यवहारे संशयानः सास्नादिमत्त्वमेव गोव्यवहारनिमित्तमिति विज्ञापितस्तद्व्यवहारे प्रवर्त्यते, एवमिहाप्यभावव्यवहारे दृश्यानुपलम्भस्य प्रयोजकत्वमङ्गीकर्तव्यम्। यदि दृश्यः स्यादुपलभ्येतेति तर्कानुगृहीतं प्रत्यक्षं दृश्याभावसाधकं मन्यन्ते नैयायिकाः। धर्मकीर्तिव्याख्यातमनुपलब्धिलिङ्गं तन्मतान्नातीव विशिष्यते।

अथ हेतुस्वरूपमधिकृत्य किञ्चिदुच्यते—"तत्र स्वार्थं त्रिरूपाल्लिङ्गाद् यदनुमेये ज्ञानं तदनुमानम्" (न्या० बि० २।२)। "त्रिरूपलिङ्गाख्यानं परार्थमनुमानम्" (न्या० बि० ३।१)। त्रैरूप्यञ्च लिङ्गस्य साध्यधर्मिणि सत्त्वमेव, सपक्ष एव सत्त्वम्, असपक्षे चासत्त्वमेव निश्चितम्। अयमत्र निष्कर्षः—यः खलु हेतुः साध्यप्रतिबद्धः साध्याभाववदवृत्तिश्च स एव साध्यधर्मिणि साध्यमनुमापयेत्। अयमेव पक्षः—"पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः। अविनाभावनियमात्" इति दिङ्नागाचार्येण प्रतिपादितो धर्मकीर्तिना च प्रमाणवार्त्तिके विरोधिभिरापादितदूषणानां निराकरणेन व्युत्पादितः। पक्षधर्मवचनेन हेतोः साध्यधर्मिणि सत्त्वम्, तदंशस्तद्धर्मः साध्यस्तेन व्याप्त इति कथनेन सपक्षसत्त्वं विपक्षव्यावृत्तत्वञ्च प्रवेदितम्।

नैयायिकैरङ्गीकृतमसत्प्रतिपक्षितत्वमबाधितत्वं चेत्यधिकं रूपद्वयं प्रत्याख्यातम्, प्रथमस्यासंभवाद् द्वितीयस्य हेतुधर्मत्वानङ्गीकारात्। पक्षे साध्याभाव एव बाधः, स च न हेतुदोषः। सत्प्रतिपक्षरूपविरुद्धाव्यभिचारो नाम हेत्वाभासो न संभवीति धर्मकीर्तेर्मतम्। स च—"विरुद्धश्चासौ साधनान्तरसिद्धस्य धर्मस्य विरुद्धसाधनात्। अव्यभिचारी च स्वसाध्याव्यभिचाराद्विरुद्धाव्यभिचारी" (न्या. वि. टी. ३।११०) इति धर्मोत्तरेणेत्थं व्याख्यातः—प्रमाणसिद्धे हि त्रैरूप्ये स एव हेत्वाभासः संभवति यस्य प्रमाणसिद्धं रूपम्। न च विरुद्धाव्यभिचारिणः संभवोऽस्ति। नहि कार्यं कारणमवधीर्य स्वभावो वा साध्यव्याप्तत्वं विहाय संभवति। अनुपलम्भस्यापि यथोक्तलक्षणस्य वस्त्वभावाव्यभिचारित्वान्न विरुद्धत्वसंभवः। न चान्योऽव्यभिचारी, केवलं भ्रान्त्या "अवस्तुदर्शनबलप्रवृत्तमागमाश्रयमनुमानमाश्रित्य तदर्थविचारेषु विरुद्धाव्यभिचारी साधनदोष उक्तः" (न्या० बि०

३. २२४)। तत्र पक्षे हेतोरसत्त्वेऽसिद्धिः, सपक्षे चासत्त्वे विरुद्धत्वम्, विपक्षे सत्त्वे च अनैकान्तिकत्वमिति त्रयो हेतुदोषाः प्रसज्यन्ते। यः खलु हेतुत्वेनाभिमतः पक्षेऽसन् सोऽसिद्धः, सपक्षविपक्षोभयवृत्तिः साधारणानैकान्तिकः, विपक्षमात्रवृत्तिहेतुश्च विरुद्ध इति पर्यवसन्नम्। एतत्त्रयहेतुदोषव्युदासार्थं लिङ्गत्रैरूप्यकथनम्। उक्तञ्च—"हेतोस्त्रिष्वपि रूपेषु निश्चयस्तेन वर्णितः। असिद्धविपरीतार्थव्यभिचारिविपक्षतः॥" (प्र० वा० ३. १४)। अत्र पक्षसत्त्वमित्यत्र पक्षशब्दः साध्यधर्मिपरः, यत्र साध्यो धर्मो न सिद्धः किन्तु सिषाधयिषितः। निश्चितसाध्यधर्मवान् सपक्षः, निश्चितसाध्याभाववान् विपक्ष इति निष्कर्षः, एतल्लक्षणस्यैव हेतोः साध्यव्याप्तिसंभवात्। साध्यव्याप्तिश्च यत्र हेतुस्तत्र साध्यं यत्र न साध्यं तत्र न हेतुरित्यन्वयव्यतिरेकाभ्यामेवावसीयते। अत्र च हेतुसाध्यशब्दौ सामान्यपरौ हेतुत्वावच्छिन्नसाध्यत्वावच्छिन्नरूपौ। अस्याश्च व्याप्तेः सूक्ष्मेक्षिकया नव्यन्याये सप्रपञ्चः परिष्कारः कृतः। स च तत्र कृतपरिचयानामतिविदितः। उदयनाचार्येणात्मतत्त्वविवेके (पृ० ८६३) व्याप्त्यपरपर्यायः प्रतिबन्धः स्वाभाविकः सम्बन्ध इत्युक्तम्। धर्मकीर्तिनाऽपि स्वभावप्रतिबद्धत्वे ह्यर्थोऽर्थान्तरं गमयेदिति ब्रुवता प्रतिबन्धस्य स्वाभाविकसम्बन्धत्वमङ्गीकृतमेव। स्वाभाविकः सम्बन्ध इत्यत्र स्वाभाविको निरुपाधिक इत्यर्थः। उपाधिश्च साध्यप्रयोजकं निमित्तान्तरम्। तस्योपाधेश्च लक्षणम्—"साधनाव्यापकत्वे सति साध्यव्यापकत्वम्", विपक्षे बाधकाभावादुपाधेर्ज्ञानम्, विपक्षे बाधकाच्चानुपाधिकत्वज्ञानं संभवति। विपक्षबाधकश्च तर्कः सहचारदर्शनेन व्याप्तिज्ञाने सति तत्र व्यभिचारशङ्काव्युदासेन प्रमाणमनुगृह्णाति। व्यभिचारव्युदासश्च यत्र स्वतः सिद्धस्तत्र न तर्कापेक्षा। अतस्तर्कस्यापि व्याप्तिमूलकत्वेन तदर्थं तर्कान्तरानुसरणेनानवस्थाप्रसङ्गस्य दुर्निवारत्वमापादितं खण्डनकृता। उदयनाचार्येण न्यायकुसुमाञ्जलौ—"व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः" इति ब्रुवता शङ्काशमनार्थं तर्कानुसरणं सति स्वक्रियाव्याघाते निवर्तत इति प्रख्यापितम्। व्याघातोऽपि तर्क इति श्रीहर्षस्य प्रत्यवस्थानं विदितवेद्यानां सुप्रतीतमेवेति कृतं प्रसक्तानुप्रसक्त्या।

अथेदानीं पात्रस्वामिनाम्ना केनापि जैनतार्किकेण हेतोस्त्रैरूप्यमधिकृत्य महानाक्षेपः कृतः। तन्मतमेवान्तर्व्याप्तिवादस्य निबन्धनमभूत्। उक्तञ्च तेन—"अन्यथानुपपन्नत्वं यस्य तस्यैव हेतुता। दृष्टान्तौ द्वावपि स्तां वा मा वा तौ हि न कारणम्॥

अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्। नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥ ( त० सं० पृ० ४०६ ) इति। अस्य खल्वाशय एवं निरूप्यते—यदि हेतोः साध्यव्याप्तिर्दृष्टान्त एव गृह्येत तदा साध्यधर्मिणि हेतोः साध्यव्याप्त्यग्रहणादनुमानमेव न संभवेत्। सर्वोपसंहारेण व्याप्तिग्रहणेऽपि नानुमानस्य प्रामाण्यम्, व्याप्तिग्राहकप्रमाणाधिगतविषयत्वेन ज्ञातज्ञापकत्वात् स्मृतिवत्। यच्च पक्षे सत्त्वमेवेति हेतुरूपमुक्तम्, तदपि न सम्यक्, साध्यव्याप्तस्यैव हेतोः पक्षधर्मत्वे गमकत्वं न तु सत्तामात्रेण। सपक्षसत्त्वमपि न हेतुरूपम्, तन्मात्रस्य व्याप्तिनिबन्धनत्वाभावात्। एवं विपक्षासत्त्वमपि तथैव। नहि विपक्षेऽदर्शनमात्रेण हेतुः सर्वसाध्याभावाधिकरणावृत्तिर्निश्चेतुं शक्यः। यावत्पर्यन्तं हेतोः साध्याभाववद्वृत्तित्वं तर्काख्येन प्रमाणेन बाधितं न भवेत् तावत् सहस्रकृत्वोऽप्यन्वयसहचारदर्शनेन व्यतिरेकसहचारदर्शनेन च न हेतुसाध्ययोः प्रतिबन्धः शक्यनिश्चयो भवेत्। तस्मादन्यथानुपपन्नत्वमेवैकं हेतुलक्षणं युक्तम्। उक्तञ्च पुनस्तेन —"विना साध्याददृष्टस्य दृष्टान्ते हेतुतेष्यते। परैमेंया पुनर्धर्मिण्यसंभूष्णोर्विनाऽमुना ॥ अर्थापत्तेश्च शाबर्या मैक्षवाच्चानुमानतः। अन्यदेवानुमानं नो नरसिंहवदिष्यते ॥" ( त० सं० पृ० ४०६ ) इति। अपि च यद्यनुपलम्भस्य साध्यप्रतिबन्धो नास्ति तदाऽप्रतिबद्धोऽपि हेतुर्गमकत्वेनाभिमत इति त्रिधैव स इति यदुक्तं दिङ्नागेन तदसङ्गतं स्यात्। अथ प्रतिबन्धोऽस्ति, तदा कार्यस्वभावयोरेवान्तर्भावात् त्रिधैव स हेतुरिति नियमो न युज्यते, अनुपलम्भस्य कार्यस्वभावयोरेकतरस्मिन्नन्तर्भावे हेतोर्द्विप्रकारत्वादिति।

अत्र प्रतिविधीयते—इदमन्यथानुपपत्तिलक्षणं किं सामान्येन गम्यतेऽथवा पक्षेऽथवा दृष्टान्त इति विचारणीयम्। यदि सामान्येनैव साध्येन हेतोरविनाभावित्वं निश्चितम्, न तेन साध्यधर्मिणि विवक्षितस्य साध्यस्य सिद्धिः स्यात्। तथा हि—चाक्षुषत्वस्य हेतोरनित्यत्वेन साध्येनाविनाभावित्वं सामान्येनावसितमपि न तेन शब्दरूपे धर्मिण्यनित्यत्वस्य सिद्धिः संभवति, चाक्षुषत्वस्य शब्दरूपे साध्यधर्मिणि असत्त्वात्। अथ चाक्षुषत्वस्य न शब्दगतानित्यत्वेनाविनाभाव इति न तत्र चाक्षुषत्वहेतुना साध्यानुमानमित्युच्येत, तदपि न साधु, चाक्षुषत्वस्यानित्यत्वस्य च धर्मिविशेषमनपेक्ष्यैव व्याप्तिनिश्चयात्। शब्दोऽनित्यश्चाक्षुषत्वादित्यनुमाने नहि चाक्षुषत्वं व्याप्यत्वासिद्धम्, किन्तु स्वरूपासिद्धमेव। तयोर्व्याप्तौ स्थितायामपि यदि न तस्य

साध्यगमकत्वं शब्दरूपे धर्मिणि तदा हेतोः पक्षधर्मत्वमवश्यमनुमितेरङ्गं वक्तव्यम्। किञ्च साध्यसाधनयोर्व्याप्तिः सर्वोपसंहारेण गृहीताऽपीह साध्यधर्मिणि इदानीं साध्य-धर्म इति देशकालविशेषावच्छेदेन निश्चयमाधातुं न प्रभवति। नहि व्याप्तिग्रहणवेलायां सर्वेषामेव धर्मिणां शृङ्गग्राहिकया ज्ञानं समस्तीति कस्यापि सम्मतम्। तथात्वे व्याप्तिग्राहकमानेनैव साध्यसिद्धावनुमानमप्रयोजनं स्यात्। अथ पक्षधर्मताऽपि हेतोरनुमानाङ्गमास्थीयते तदा त्रैरूप्यमेव फलत आयातं भवन्मतेऽपि, पक्षधर्मत्वस्याङ्गी-कारात्। अन्यथानुपपत्त्या साध्याभावाधिकरणावृत्तिहेत्वभावरूपया व्यतिरेको विपक्षासत्त्वलक्षणोऽङ्गीकृत एव। व्यतिरेकस्य चान्वयसापेक्षत्वादनिच्छतापि हेतोः सपक्षसत्त्वमप्यङ्गीकर्त्तव्यमेव। तथा च—"अन्यथाऽनुपपत्त्या हि व्यतिरेकान्वयौ गतौ। तस्य धर्मिणि सद्भावात् पक्षधर्मत्वसंश्रयः॥" (त० सं० पृ० ४०८) इति त्रैरूप्यमेवान्यथानुपपत्त्या ख्यापितं भवति। केवलं शब्दलाघवमेव सम्पादितं न त्वर्थलाघवमपि।

यच्चोक्तं दृष्टान्ताद्यनपेक्षितया साध्यधर्मिण्येवाविनाभावो गृह्यते। तस्मान्मीमां-सकाभिमतार्थापत्तितो बौद्धसम्मतादनुमानाच्च नरसिंहवदार्हतानामनुमानमिति तदप्यप-हस्तितमेव। साध्यधर्मिणि व्याप्तिग्राहकमानेन साध्यसिद्धौ हेतोर्नैरर्थक्याद् गतमनु-मानेन। अथ दृष्टान्तधर्मिण्यविनाभावप्रतिपत्तिरिष्येत तदा साध्यधर्मिणि न साध्यस्य निश्चयो हेतुना शक्यक्रियः। अथ सर्वोपसंहारेण व्याप्तिर्निश्चीयत इत्यभिप्रायस्तदा शृङ्गग्राहिकया धर्मिविशेषाननुल्लिख्यैव व्याप्तिज्ञानं जायत इति सर्वसम्प्रतिपन्नः पक्षोऽ-भ्युपगतो भवति। तत्र च केवलस्य व्याप्तिज्ञानस्य साध्यसिद्ध्यनङ्गत्वमनुपदमेव प्रदर्शितम्। तस्मादन्यथानुपपत्तिरूपैकलक्षणो हेतुरित्युक्तिः केवलमुत्तानदृष्टीनां चेतसि चमत्काराय कल्पते। अन्यथानुपपत्तिश्च व्याप्तेरेव नामान्तरम्। केवलञ्च व्याप्तिज्ञानं पक्षधर्मत्वमन्तरेण न साध्यस्य गमकमिति च चाक्षुषत्वहेतोरनित्यता-न्यथानुपपन्नस्यापि शब्दरूपे धर्मिणि साध्यागमकत्वं दृष्टमेव। एवं सति—"तेनैकलक्षणो हेतुः प्राधान्याद् गमकोऽस्तु नः। पक्षधर्मादिभिस्त्वन्यैः किं व्यर्थैः परिकल्पितैः॥" (त० सं० ४०७) इति यदुक्तं तत्केवलं शब्दाडम्बरमात्रमिति स्वरूपाविष्करणमेव तन्निराकरणमिति न तत्र प्रयत्नान्तरमपेक्ष्यते। यदपि च शब्दलाघवं कृतं तदपि व्यतिरेकव्याप्तौ न दृष्टान्तापेक्षेति—"तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः। ख्याप्येते

विदुषां वाच्यो हेतुरेव हि केवलः ॥" (प्र० वा० ३-२६) इति धर्मकीर्तिनैवोक्तम्। मनोरथेन च—ये तु प्रतिबन्धं विदन्ति तेषां विदुषां हेतुरेव केवलो वाच्यो न दृष्टान्तः, तत्र दर्शनीयस्य प्रतिबन्धस्य सिद्धत्वादिति धर्मकीर्तिमतमेव भाषान्तरेण स्वोपज्ञतया ख्यापितम्। अन्यथानुपपत्तिश्च प्रतिबन्धः स्वाभाविकः सम्बन्ध इति धर्मकीर्तेरेवानुवादः कृतो न किञ्चनात्रापूर्वं वस्तु।

यदपि च तेनोक्तम्—"अन्यथानुपपत्त्यैव शब्ददीपादिवस्तुषु। अपक्षधर्मभावेऽपि दृष्टा ज्ञापकताऽपि च ॥" ( त० सं० ४०७ ) इति, तदपि न क्षोदक्षमम्। शब्दस्य न बाह्यार्थापेक्षयाऽन्यथानुपपन्नत्वं सिद्धमित्यलिङ्गत्वमेव। उक्तञ्च धर्मकीर्तिना—"वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते। प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥" ( प्र० वा० वृ० ४ ) इति। विवक्षायामेव शब्दस्य गमकत्वं लिङ्गविधया, तत्र च त्रैरूप्यमस्त्येव। यच्च दीपनिदर्शनमन्यथानुपपत्तावुपन्यस्तं तदप्यसमीक्षिताभिधानमेव। प्रदीपो न लिङ्गत्वेन साध्यगमकः, किन्तु समुत्पन्ने घटे विज्ञानजनकत्वेनेति तस्यालिङ्गभूतस्य पक्षधर्मत्वादिचिन्ताऽप्रसक्तैव।

नन्वेवमनुमानस्य प्रामाण्ये स्थितेऽपि न पक्षधर्मत्वं सर्वत्रानुमानाङ्गमित्यभ्युपगमनीयम्, अपक्षधर्मस्यापि गमकत्वदर्शनात्। तथा हि—अधो देशे दृष्टो नदीपूर उपरिष्टाद् वृत्तां वृष्टिं गमयति। किञ्च, मातापित्रोर्ब्राह्मणत्वेन पुत्रस्य ब्राह्मणत्वमनुमीयमानं न पक्षधर्ममपेक्षते। यदि क्लेशेनात्र पक्षधर्मत्वं प्रकल्प्येत तन्नाञ्जस्यमृच्छेत्। मातापित्रोश्च ब्राह्मणत्वं व्यधिकरणमेव पुत्रस्य ब्राह्मणत्वं गमयति।

अत्रोच्यते, यदि पक्षधर्मतामनपेक्ष्यैव नदीपूरो वृष्टिं गमयेत् तर्हि कथमुपरिष्टादेव तद् गमयति नान्यत्र, पूरस्य तत्सम्बन्धित्वादिति चेत्तर्हि यतोऽयं नदीपूर आयातस्तत्रैव वृष्टेरनुमानं न त्वन्यत्र मरुदेशादौ, नदीपूरस्यातत्सम्बन्धित्वात्। तथा च नदीपूरस्योपरिदेशसम्बन्धित्वेनैव गमकत्वात् पक्षधर्मत्वं स्पष्टमेव, न तु क्लेशकल्पनीयम्। शिशोर्ब्राह्मणत्वानुमाने शिशुसम्बन्धिनोरेव मातापित्रोर्ब्राह्मणत्वं गमकं न त्वतत्सम्बन्धिमातापित्रोर्ब्राह्मण्यम्। अतोऽत्रापि पक्षधर्मस्यैव हेतोर्गमकत्वम्। वस्तुतस्तु हेतोर्व्यधिकरणत्वे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत् साध्यधर्मिणि, यथा चाक्षुषत्वस्य शब्दानित्यत्वे साध्ये। अतश्च ब्राह्मणभूतमातापितृजन्यत्वं शिशोर्ब्राह्मण्यानुमाने हेतुरिति कथमपक्षधर्मस्य गमकत्वं शक्योत्प्रेक्षम्। यदपि

चोक्तम्—चन्द्रोदयात् कुमुदविकाशस्य जलधिवृद्धेश्चानुमानम्, हेतुसाध्ययोर्वैयधिकरण्येऽप्यातपस्य दृष्ट्या पर्वतस्यापरभागे छायानुमितिः, कृत्तिकोदयाद् रोहिण्युदयस्यासन्नत्वमनुमीयते। अतो न सर्वस्य हेतोः कार्यस्वभावानुपलब्धिरूपत्वमेव, तद्व्यतिरिक्तस्यापि गमकत्वदर्शनादिति।

तत्र प्रतिसमाधीयते। न चैतेष्वनुमानेषु हेतोरपक्षधर्मत्वम्। तथा हि—चन्द्रोदयात् कुमुदविकाशस्य जलधिवृद्धेश्चानुमितौ चन्द्रोदयो हेतुः, स च नापक्षधर्म एव गमकः, यस्मिन्नेव काले चन्द्रोदयस्तस्मिन्नेव काले कुमुदविकाशादेः संभवात्। तथा च काल एवात्र धर्मी तस्मिन्नेव साध्यसाधनयोः सामानाधिकरण्यम्। न च कालरूपः पदार्थो वस्तुभूतो बौद्धानामसम्प्रतिपन्नः, तथा च वन्ध्यापुत्रः शूरः समरविजयित्वादित्यनुमानवदाश्रयासिद्धता हेतोरिति कथमनुमानमिति वाच्यम्, यद्यपि कालो नाम स्वतन्त्रः पदार्थो बौद्धानामसम्प्रतिपन्नस्तथापि पूर्वाह्णादिप्रत्ययविषयस्य महाभूतविकारस्य काल इत्यभिधेयस्याभ्युपगमान्नाश्रयासिद्धता हेतोरापादनीया।

अथ भवतु पक्षधर्मत्वं हेतूनाम्, कार्यस्वभावादिष्वनन्तर्भावात्, तदतिरिक्तहेत्वङ्गीकारस्तु बौद्धस्य दुर्निवार इति चेदुच्यते—कुमुदविकाशादिषु कार्यकारणभावस्यैव प्रतिबन्धरूपत्वं बोद्धव्यम्। तथा हि—यदेव कारणं चन्द्रोदयादीनां तदेव तत्समानकालोत्पन्नेषु कुमुदबोधादिषु सहकारिकारणतां प्रतिपद्यत इति चन्द्रोदयादयः स्वकारणमनुमापयन्तस्तद्धेतुकसमानकालभाविन्यपि कुमुदबोधादीन्यनुमापयन्तीति निश्चेतव्यम्। अन्यथा प्रतिबन्धाभावादेव न गम्यगमकभावो भवेत्। प्रतिबन्धनिबन्धनं च कार्यकारणभावः स्वभावश्चेति पूर्वमेव परीक्षितम्। यत्तु कृत्तिकोदयादनन्तरभाविरोहिण्युदयानुमानं तत्रापि कृत्तिकोदयकारणस्य सन्तत्या रोहिण्युदयहेतुत्वमवसातव्यम्। एतच्च—"एकसामग्र्यधीनस्य रूपादेरसतो गतिः। हेतुधर्मानुमानेन धूमेन्धनविकारवत्॥" (प्र० वा० पृ० २८८) इति धर्मकीर्तिनैव कार्यस्य कारणानुमानद्वारेण तत्समानकालिकतत्समनियतस्य सहकारिकारणादेरप्यनुमानेन तत्कार्यस्य तस्यानुमानं कार्यकारणभावमूलकमेव। यथा धूमादग्न्यनुमानेन तत्कार्यस्येन्धनविकारस्याप्यनुमानं भवतीति दर्शितम्। यैव रसस्य सामग्री सैव रूपादीनामपीत्येकसामग्र्यधीनस्य रूपादे रसादनुमानं कारणानुमानप्रणालिकया जायमानं कार्यकारणभावमूलकमेव।

अयमत्र निष्कर्षः—कार्यस्वभावानुपलब्धिरूपं हेतुत्रितयमेव बौद्धैः साध्यगमकमिष्यते, त्रयाणामेव हेतूनामविनाभावसंभवात्। अविनाभावश्च कार्यस्वभावाभ्यां व्याप्तः। तत्र विधौ साध्ये कार्यं स्वभावश्च हेतू, प्रतिषेधे साध्येऽनुपलब्धिरेव। अतस्त्रिविध एव हेतुर्भवति। कार्यादेरज्ञाताविनाभावस्याहेतुत्वम्। कारणव्यापकानुपलब्ध्योरप्यविनाभावेनैव गमकत्वम्। यस्मादेवाविनाभावात् कार्यं कारणं व्याप्यं च व्यापकं गमयति, तस्मादेव कारणानुपलब्धिर्व्यापकानुपलब्धिश्च कार्याभावं व्याप्याभावञ्च गमयतः, अभावानुमाने तत्प्रतियोगिभूतभावानुमाननिबन्धनस्याविनाभावस्य प्रयोजकत्वात्। यदा घटादेरुपलम्भजननयोग्यः स्वभाव उपलब्धिरुच्यते हेतुसाकल्ये सत्युपलम्भाव्यभिचारात्। उपलब्धिश्च सत्ता, तदा अनयोस्तादात्म्यम्। तेन स्वभावानुपलब्ध्या दृश्यघटादेरभावव्यवहारे साध्ये एष एव तादात्म्यरूपाविनाभावनियमः प्रयोजको भवति। न चानुपलब्धेः कार्यहेतावन्तर्भावः, तादात्म्यातिरिक्तप्रतिबन्धानपेक्षणात्। हेतोश्च साध्यप्रतीतिः साध्यायत्ततायां सत्यामुपपद्यते। न च तदायत्तस्वभावत्वं कार्यादित्रितयातिरिक्ते संभवतीति बौद्धानां सिद्धान्तः। अत्र च नैयायिकादीनां विप्रतिपत्तिरतिमहती दृश्यते। विस्तरभिया मतिमान्द्याच्च तत्परीक्षातो विरम्यते। यच्चात्र किञ्चिदुक्तं तन्मूलग्रन्थेभ्यः समाहृत्य प्रायशस्तत्रत्यानामेव वचनानामनुवादेन। न किञ्चिदत्रापूर्वमुद्भावितम्, शक्त्यभावात्।

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः।
वचोविन्यासवैचित्र्यमपि नात्रोपपद्यते॥
संग्रहाद् विप्रकीर्णानामुक्तस्यैवोपपादनात्।
अनुक्तस्यानुपन्यासात् सन्तोषो विदुषां कथम्॥
यद्वा निर्गुणमप्यर्थमभिनन्दन्ति साधवः।
प्रणयिप्रार्थनाभङ्गसंविधानेष्वदीक्षिताः॥

इत्याशासाना अत्रैव विरतिमभ्यर्थयामहे। इति शिवं भूयात्॥

———

# शक्तिपातविमर्शः

श्रीरघुनाथपाण्डेयः, वा०सं० विश्वविद्यालये आगमाध्यापकः।

परिपक्वमला ये तान् शक्तिपातेन शोधयन्।
परे तत्त्वे योजयते दीक्षया गुरुमूर्तिगः॥ १॥
यः स्वतन्त्रः प्रकाशात्मा शिवः संच्छाद्य स्वं वपुः।
क्रीडयाऽनुप्रकटयत्यस्मै मे सततं नमः॥ २॥

अथ कोऽयमनुग्रहशक्त्यपराभिधेयः शक्तिपातो नाम। अत्र खेटपालदेशिकप्रभृतय आहुः--अणूनां या स्वसंविदभिव्यक्तिस्तन्निरोधिनी या मलसंबन्धिनी शक्तिस्तस्याः स्वव्यापारौदासीन्यरूपं यन्माध्यस्थ्यं स एव मलपरिपाकः, तद्धेतुको यः शिवरश्मिस्पर्शः स एव शक्तिपात इति। तदुक्तं तन्त्रालोके—

तस्य रोद्ध्री यदा शक्तिरुदास्ते शिवरश्मिभिः।
तदाणुः स्पृश्यते स्पृष्टः स्वके ज्ञानक्रिये स्फुटे॥ (तन्त्रा० १३।५०)
समाविशेदयं सूर्यकान्तोऽर्केणेव चोदितः।
रोद्ध्र्याश्च शक्तेर्माध्यस्थ्यतारतम्यवशक्रमात्॥ (तन्त्रा० १३।५१)
विचित्रत्वमतः प्राहुरभिव्यक्तौ स्वसंविदः।
स एष शक्तिपाताख्यः शास्त्रेषु परिभाष्यते॥ (तन्त्रा० १३।५२)

व्याख्यातं चैवमेतत्कारिकात्रयं महामाहेश्वराचार्यजयरथेन। तथाहि—नन्वेवंविधं मलं चेन्नित्यमणुभिर्वा नित्यमेव संबद्धं तन्न कदाचिदपि संसारः शाम्येदित्यनिर्मोक्ष एव प्रसजेदि(?ज्जेते)त्याशङ्क्याह—तस्य रोद्ध्रीति। उदास्ते इति स्वस्मान्निरोधाख्याद् व्यापारान्निवर्तत इत्यर्थः। स्पृश्यते इति शिवशक्तिपातभाग् भवेदित्यर्थः। तेन यथार्करश्मिस्पृष्टः सूर्यकान्तः स्वकामभिज्वलनलक्षणां क्रियां समाविशेत्, तथायमपि शिवशक्तिपातपूतः स्वके पूर्णे ज्ञानक्रिये समभिव्यक्तस्वसंविद्वैभवो भवेदित्यर्थः। ननु यद्येवं तत्कथं शुद्धात्मनामपि पूर्णनिजज्ञानक्रियासमावेशाविशेषात् स्वरूपाभिव्यक्तावन्योन्यस्य वैचित्र्यं स्यादित्याशङ्क्याह-रोद्ध्र्याश्चेति। अतः शिवरश्मिस्पर्शाद्

हेतोरणूनां या स्वसंविदभिव्यक्तिस्तस्यां वैचित्र्ये मलसंबन्धिन्या एव रोद्ध्र्याः शक्तेः स्वव्यापारौदासीन्यात्मनो माध्यस्थ्यस्य यत्तारतम्यं परात्परमतिशयः, तत्प्रयुक्तः क्रमो निमित्तम्, येनात्मनां शुद्धत्वेऽप्यन्योन्यस्य विशेषः ।

ननु सर्वत्र पारमेश्वरः शक्तिपात एव स्वसंविदभिव्यक्तौ निमित्तमित्यादिष्टम्, तत्कथमिह रोधशक्त्यौदासीन्यात्मा मलपरिपाक एवोक्त इत्याशङ्क्याह—स इति मलपरिपाकहेतुकः प्रक्रान्तः शिवरश्मिस्पर्शः । एष इति समनन्तरमेव प्रत्यक्षतया परामृष्टः परिभाष्यत इति श्रीमत्खेटपालाचार्यप्रभृतिभिः स्वसमयेनावस्थाप्यत इत्यर्थः ।

अयं च खेटपालाद्याचार्यसंमतः शक्तिपातो मलकर्माद्यपेक्षः । एतच्च मतं दूषयित्वाभिनवगुप्तैः—

कुलजातिवपुष्कर्मवयोऽनुष्ठानसंपदः ।
अनपेक्ष्य शिवे भक्तिः शक्तिपातोऽफलार्थिनाम् ।
या फलार्थितया भक्तिः सा कर्माद्यमपेक्षते ॥ (तन्त्रा० १३।११७, ११८)
ततोऽत्र स्यात्फले भेदो नापवर्गे त्वसौ तथा । (तन्त्रा० १३।११९)

इत्युक्तम् । व्याख्यातं च जयरथेन—एतन्मते च शिवे भक्तिरेव शक्तिपात इति लिङ्गलिङ्गिनोरभेदोपचारात् । भक्तिर्हि नामास्य प्राथमिकं चिह्नम् । उक्तं चैतन्मालिनीविजयतन्त्रे—"तत्रैतत्प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला" इति । शक्तिपातरूपे चानुग्रहे कर्त्तव्ये परमेश्वरस्यैव कर्ममलाद्यनपेक्षं कर्तृत्वम्, तस्य सर्वत्र स्वातन्त्र्यात् । तदुक्तं तत्रैव—

तेन शुद्धः स्वप्रकाशः शिव एवात्र कारणम् ।
स च स्वाच्छन्द्यमात्रेण तारतम्यप्रकाशकः ॥ (तन्त्रा० १३।११६)

अत्रायं विवेकः—कर्मादीनां शक्तिपाताधिकारप्राप्तावेवोपयोगः, न तु शक्तिपाते । अधिकारप्राप्तौ तु सत्यां भगवान् स्वतन्त्र एव शक्तिपातं करोत्यन्यानपेक्ष इति । तन्त्रसारेऽपि—"स्वातन्त्र्यमात्रसारश्चासौ परमशिवः शक्तेः पातयितेति निरपेक्ष एव शक्तिपातो यः स्वरूपप्रथाफलः" इति (तन्त्रसारे ११ आ० पृ० ११८) । फलभेदेन शक्तिपातश्चतुर्धा । तत्राद्यः स्वरूपप्रथाफलः कर्मनिरपेक्षः । द्वितीयस्तु भोगोत्सुकस्य भोगफलः कर्मापेक्षः । तृतीयस्तु

लोकोत्तररूपभोगोत्सुकस्य परमेश्वरेच्छाप्रेरितमायागर्भाधिकारीयरुद्रविष्णुब्रह्मादिभाव-प्राप्तिद्वारेण मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरादिरूपत्व-मायापुंविवेक-पुंस्कलाविवेक-पुंप्रकृति-विवेक-पुंबुद्धिविवेकादिफलस्तदधरतत्त्वभोगप्रतिबन्धफलश्च कर्मनिरपेक्षः। चतुर्थस्तु भोगमोक्षोभयफलस्तदुभयोत्सुकस्य भोगे कर्मापेक्षो मोक्षे तु तन्निरपेक्ष इति सापेक्षनिरपेक्षः। एतदप्युक्तमग्रे तत्रैव—"यस्तु भोगोत्सुकस्य स कर्मापेक्षः, लोकोत्तररूपभोगोत्सुकस्य तु स एव शक्तिपातः परमेश्वरेच्छाप्रेरितमायागर्भाधिकारीय-रुद्रविष्णुब्रह्मादिद्वारेण मन्त्रादिरूपत्वं मायापुंविवेकं पुंस्कलाविवेकं पुंप्रकृति-विवेकं पुंबुद्धिविवेकमन्यच्च फलं प्रस्नुवानस्तदधरतत्त्वभोगं प्रतिबध्नाति, भोगमोक्षो-भयोत्सुकस्य भोगे कर्मापेक्षः, मोक्षे तु तन्निरपेक्ष इति सापेक्षनिरपेक्ष इति।

स चायं शक्तिपातः प्रकारान्तरेण नवधा, तीव्रमध्यमन्दभेदेन त्रैविध्यमापन्नस्य प्रत्येकमुत्कर्षमाध्यस्थ्यनिकर्षैः पुनस्त्रैविध्यात्। तथा च तीव्रतीव्रः, मध्यतीव्रः, मन्द-तीव्र इति; तीव्रमध्यः, मध्यमध्यः, मन्दमध्य इति; तीव्रमन्दः, मध्यमन्दः, मन्दमन्द इति नवधा भेदः। तत्र तीव्रतीव्रात् शक्तिपातात्तदैव देहपाते परमेश्वरप्राप्तिरूपं फलं जायते। मध्यतीव्रात् शास्त्राचार्यानपेक्षिणः पुरुषस्य स्वस्मिन् प्रत्ययवतः प्रातिभज्ञानो-दयरूपं फलम्, यदुदये बाह्यं दीक्षादिप्रयुक्तं शिष्यसंस्कारं विनैव भोगापवर्गप्रदः प्रातिभो गुरुरित्युच्यते। सत्यपि तस्य प्रातिभत्वे स्वोपदेशसंवादाय शास्त्राद्यपेक्षा स्यादपीति प्रातिभस्याचार्यस्य निर्भित्तिसभित्त्यादिबहुभेदत्वमागमेषूक्तम्। मन्दतीव्रात् शक्तिपातात् सद्गुरुविषया यियासा भवति, तथाऽसद्गुरुविषयाया यियासाया-स्तिरोभावो भवति, असद्गुरुतश्च सद्गुरुं प्रति गमनं भवति। स च सद्गुरुः समस्तै-तच्छास्त्रतत्त्वज्ञानपूर्णः साक्षाद् भगवद्भैरवभट्टारक एव, असद्गुरुस्त्वन्यः सर्व एव। एवं यियासुर्गुरोर्ज्ञानलक्षणां दीक्षां प्राप्नोति, यथा सद्य एव जीवन्नपि मुक्तो भवति। दीक्षा चात्र अवलोकनात्, कथनात्, शास्त्रसंबोधनात्, गुरोश्चर्यादर्शनात्, यथाविधि हुतावशिष्टस्य चरोः शिष्याय सम्प्रदानादित्यादिरूपा बहुविधा भवतीति तीव्रः शक्तिपातस्त्रिधा।

तीव्रमध्यात्तु शक्तिपातात् कृतदीक्षाकोऽपि स्वात्मनः शिवतायां न तथा दृढप्रति-पत्तिमान् भवति, ज्ञानपरिपाकक्रमेण तु देहान्ते शिव एव भवति। मध्य-मध्यात्तु शक्तिपातात् शिवत्वप्राप्तावुत्सुकोऽपि भोगप्रेप्सुर्भवतीति प्रागुक्तरीत्या

दीक्षायां सत्यां ज्ञानभाजनं भवति। स च योगाभ्यासलब्धमननेनैव देहेन भोगं भुक्त्वा देहान्ते शिव एव। मन्दमध्यात्तु शक्तिपाताद् देहान्तरेण भोगं भुक्त्वा शिवत्वमेतीति मध्यः शक्तिपातस्त्रिधा। शक्तिपाते तु यदा भोगोत्सुकता प्रधानभूता तदा मन्दत्वम्, यतः पारमेश्वरमन्त्रयोगोपायतया तत्रौत्सुक्यम्। यतश्च तत्र पारमेशमन्त्रयोगादेर्मोक्षपर्यवसायित्वमतस्तस्य शक्तिपातरूपता। मन्देऽपि शक्तिपाते तारतम्यात्तीव्रमध्यमन्दत्वप्रयुक्तं त्रैविध्यमिति। वैष्णवादीनां तु शक्तिपातस्य राजानुग्रहकल्पस्य न मोक्षान्तता। एष सर्वोऽपि प्रागुक्तः शक्तिपातोऽवान्तरभेदसहितः फलसहितश्च तन्त्रसारे एकादशाह्निके स्पष्टीकृतः। तन्त्रालोकेऽपि त्रयोदशाह्निके एकोनत्रिंशदधिकशततमश्लोकादारभ्य द्वात्रिंशदुत्तरशततम१२९–१३२पद्यैरेतदेव व्यञ्जितम्। शक्तेः पातयितारो गुरवस्तु बहवोऽधरशासनस्थाः। ते च शिवस्य मण्डलमात्रदर्शनेऽप्यनधिकारिणः। ऊर्ध्वशासनस्थस्तु गुरुर्न केवलं मण्डलदर्शनेऽधिकारी प्रत्युताधराधरशासनं प्राणयत्यपि पूर्णत्वादिति सर्वाधिकारी। स च दैशिको गुरुराचार्यः, दीक्षकः, चुम्बक इति त्रेधा। तेष्वपि प्रथमः पूर्णज्ञान एव सर्वोत्तमस्तेन विना दीक्षाद्यसम्पत्तेः। दीक्षकस्तु चरुदानदीक्षयैव शक्तिं पातयितुं समर्थः, नावलोकादिदीक्षया। चुम्बकस्तु गुरुः शिवतत्प्राप्त्युपायविषयकमन्दविज्ञानवान् योगप्रभावेण सिद्ध्यादिना शिष्यचित्ताकर्षकः। एतेषु त्रिष्वपि गुरुषु पूर्वपूर्वालाभे उत्तरोत्तरान् गुरूनुपेयात्। ज्ञानपूर्णताकाङ्क्षी च बहूनपि गुरून् कुर्यात्। सम्पूर्णज्ञानगुरुत्यागे तु प्रायश्चित्तमेव। ननु सोऽप्यब्रुवन् विपरीतं वा ब्रुवन् किं न त्याज्यः? नैवेति ब्रूमः, तस्य हि पूर्णज्ञानत्वादेव रागाद्यभाव इत्यवचनादिकं शिष्यगतेनैव केनचिदयोग्यत्वानाश्वस्तत्वादिना निमित्तेन स्यादिति तदुपासने यतनीयं शिष्येण न तु तत्त्यागे।

स एष शक्तिपातः प्रकारान्तरेण द्विधा—कर्मादिनियतिनिरपेक्षः, तत्सापेक्षश्च। तत्राद्योऽनुग्रहफलः सकृदुत्पन्नश्च न तिरोभवति, द्वितीयस्तु कर्मादिनियतिसापेक्षस्तदपगमे तिरोभवति। यतः शक्तिपाते तादृशे सत्यपि कर्माद्यपेक्षं गाढदुःखमोहभागित्वरूपं फलमुपजायते, तेन च शक्तिपातस्य तिरोभावो भवति। अनुग्रहार्थमुत्पन्नशक्तिपातस्य तु कर्मनिरपेक्षस्य न तिरोभावोऽस्ति। प्रारब्धवेगेन कदाचित्तिरोभूतशक्तिपातोऽपि पातयितुर्गुरोरिच्छावैचित्र्यादनुग्रहाद्वा पुनरपि स्वयं शक्तिपातेन युज्यते, मृतो वा जन्मान्तरे बन्धुगुर्वादिकृपामुखेनेति।

तत्र शिवस्य पञ्च शक्तयः। तथाहि—तस्य स्वातन्त्र्यमानन्दशक्तिः, तच्चमत्कार इच्छाशक्तिः, प्रकाशरूपता चिच्छक्तिः, आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिरिति। तासाञ्च शक्तीनां पातोऽत्र शक्तिपातपदेनाभिप्रेतः।

अथाधुना शक्तिपातः सहेतुकोऽहेतुको वेति विचार्यते। तत्राद्यः खेटपालऽगुरुप्रभृतीनां द्वैतवादिनाम्, अन्त्यस्तु परमेशाद्वयवादिनां वसुगुप्तसोमानन्दोत्पलाभिनवगुप्तप्रभृतीनाम्। तत्र प्रथमपक्ष एव प्राग् विमृश्यते। यदि शक्तिपातः सहेतुस्तदा तस्य हेतुर्वक्तव्यः, स च मलपरिपाक एव। तत्र मलपरिपाकस्वरूपनिरूपणात् प्राक् के मलाः कियन्तश्चेति विचार आवश्यकः। तत्र मलस्त्रिविधः—आणवमायीयकार्मभेदात्। तत्राणवं मलं नाम ज्ञातृकर्तृरूपं यत् चित्तत्त्वस्य स्वरूपं तस्यापहारः। तेनासावणुः संकुचितो जातस्तत्र स्वरूपस्य निमीलनमेव संकोचः, तस्मिन् सति स्वातन्त्र्यात्मनो बोधस्य स्वातन्त्र्यहानिः, स्वातन्त्र्यस्य चाबोध इत्याणवं मलं द्विविधमपि स्वस्वरूपापहानितयैकमेव। सति चाणवे मले द्विप्रकारे यत्स्वस्वरूपातिरिक्तस्य प्रथनं तन्मायीयं मलम्, तत्र कर्तुरबोधरूपस्य देहादेर्भिन्नस्य वेद्यस्य यत्प्रथनं तस्मिन् सति धर्माधर्मरूपं कार्मं मलं यतो जन्मभोगश्चेति। तदेतत् सर्वमीश्वरप्रत्यभिज्ञायां तद्विमर्शिन्यां (३ अ० २ आ० श्लोक ४–५) च स्पष्टमुक्तम्।

मलस्य परिपाको नाम तस्य रोधशक्तीनां स्वव्यापारौदासीन्यम्। तस्य च मलपरिपाकस्य को हेतुरिति वक्तव्यम्। स च हेतुः—वैराग्यम्, धर्मविशेषः, विवेकः, सत्सेवा, सत्प्राप्तिः, देवपूजा इत्यादिः। कालस्तु साधारणो हेतुर्न दण्डवारितः।

वैराग्यादीनां मलपरिपाकहेतुत्वं च द्वैतवादिमतखण्डनावसरे तन्त्रसारे ११ आह्निके प्रदर्शितम्। तद्यथा—अथ मलपरिपाके शक्तिपातः सोऽपि किंस्वरूपः? किं च तस्य निमित्तम्? इति। एतेन वैराग्यं धर्मविशेषो विवेकः सत्सेवा सत्प्राप्तिर्देवपूजा इत्यादिहेतुः प्रत्युक्त इति भेदवादिनां सर्वमसमञ्जसमिति। अत्र सोऽपि किंस्वरूप इत्यत्र तत्पदार्थो मलपरिपाकः, किञ्च तस्य निमित्तमित्यत्र तत्पदार्थः स एवेति। स च मलपरिपाकः शक्तिपातहेतुर्द्वैतिभिर्न स्वीक्रियते, निरपेक्षस्य शक्तिपातस्य तैः स्वीकारात्। तथाहि—मलस्य परिपाको नाशरूपस्तावन्न संभवति, मलो ह्येक इतीतरात्मनामपि नश्येदिति सर्वमुक्तिप्रसङ्गः। अथ न नाशः, अपि तु पाकः स्वशक्ति-

प्रतिबद्धता, सापि विषाग्निवत् सर्वान् प्रत्यविशिष्टेति स एव प्रसङ्गः। अथ चेदुच्यते सहेतुकेति। तत्र वक्तव्यम्—कर्म वा हेतुरीश्वरेच्छा वा? तत्र कर्म न तादृशम्, तस्य भोगैकहेतुत्वात्। नापीश्वरेच्छा, सा हि किं स्वतन्त्रा, उत परतन्त्रा? परतन्त्रा तावत् कस्य परतन्त्रा इति? स्वतन्त्रा चेत्तस्य वीतरागद्वेषत्वात् सर्वान् प्रत्यविशेषापत्तेः। अहेतुकेति चेत्; प्रागेव नाशः स्यादिति स्थितिरेवास्य न स्यादिति।

अद्वैतिमते "मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्" इति वचनादख्यातिरूपमज्ञानं मलमिति स्वीक्रियते। द्वैतवादिभिस्तु मलो द्रव्यरूपः स्वीक्रियते, चितिशक्तेराव-रकत्वेन तिमिरवद्द्रव्यरूपत्वात्। किञ्च, वैद्यव्यापारेण चक्षुषः पटलादिरिवेश्वररूप-गुरुव्यापारेण दीक्षाख्येनैव निवर्तते, न तु ज्ञानमात्रान्निवर्तते। तदेतत् सर्वमुक्तं रत्नत्रये तट्टीकायां च। तद्यथा—

सा तु संविदविज्ञाता तैस्तैर्भावैर्विवर्तते।
मलोपरुद्धदृक्छक्तेर्नरस्येवोडुराट् पशोः॥

यथा तिमिररुद्धचक्षुष एकोऽपीन्दुरनेक इव प्रतिभात्येवं मलरुद्धज्ञानशक्तेरेकैव चेतनात्मिका संविदनेकरूपेव विवर्तत इति। अग्रे च—

यथा तैमिरिको हेतुसहस्रेणापि तर्कयन्।
एकमिन्दुमनेकांस्तान् भूयोभूयः समीक्षते॥
यथा वा पित्तसन्दुष्टरसनः स्वादु तर्कयन्।
अपि तिक्तं विजानाति पयः करणदोषतः॥
यथा वासनसंयुक्ते क्वथ्यमाने च वारिणि।
विदुषामपि नीलोष्णप्रत्ययावविवेकतः॥
तथा परीक्षिता सम्यगागमैः सोपपत्तिकैः।
विवर्तमाना जातेति नष्टेति विविधेति च॥
ज्ञानानि वृत्तिं गमयेत् कारणं तिमिरादिवत्॥ इति।

स च मलो द्रव्यत्वाच्चक्षुषः पटलादिरिव न ज्ञानमात्रान्निवर्तते, अपि तु चक्षुषो वैद्यव्यापारेण पटलादिरिवेश्वरव्यापारेण दीक्षाख्येनैव निवर्तत इत्याह—

तच्छिवप्रणिधानेन शिवशास्त्रोदितेन च।
कर्मणैव निवर्त्येत नान्यथा ज्ञानकोटिभिः।
तिमिरादिर्यथारोग्यशास्त्रोक्तेनैव कर्मणा॥ इति।

तन्मलं शिवध्यानेनाङ्गभूतेन सहकृतया शिवशास्त्रोक्तया दीक्षाख्यया क्रिययैव निवर्तते। यदुक्तं श्रीमत्स्वायंभुवे—

"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति।

अत्र प्रयोगः—मलो ज्ञानानिवर्त्यो भवति, आत्मकरणाच्छादकत्वात्, तिमिरवत्। परमार्थो मलः, मलिनीकरणार्थक्रियाकारित्वात्। यथा काचतिमिरात्मको मलो भ्रमोत्पादक इति।

अथाधुना मलनिवर्तकदीक्षानिरूपणात् प्राग् वैष्णवतन्त्रोक्तकर्मसाम्यापराभिधेयः शक्तिपाको नामानुग्रहशक्तिपातकार्यं निरूप्यते। तथाहि—भगवत्संकल्पस्य पञ्चधा विभागोऽहिर्बुध्न्यसंहितायां चतुर्दशाध्याये। तद्यथा—सृष्टिः, स्थितिः, संहारः, निग्रहः, अनुग्रहश्चेति। तत्र चैतन्यतिरोधानकरी भगवतः शक्तिर्निग्रहसंज्ञां लभते, निग्रहशक्त्या च कर्मवशाज्जात्यायुर्भोगप्राप्तिः। नानाविधदुःखोपद्रुते जगति भ्राम्यति दुःखाकुले जीवे या भगवतः कापि कृपा जायमानाऽनुग्रहशक्तिः सैव च शक्तिपाक इत्यागमिकैर्निगद्यते। तेन च संकल्पेन भगवता स्वीकृतः समीक्षितश्च जीवः कर्मसाम्यं भजत्येव, नात्र सन्देहः। कर्मसाम्यं च शुभाशुभकर्मणोः स्वकार्यं प्रत्यौदासीन्यरूपम्। ततश्च वैराग्यविवेकादिक्रमेण विष्णुभावप्राप्तिरूपो मोक्षः। लक्ष्मीतन्त्रेऽपि त्रयोदशाध्याये भगवतोऽनुग्रहशक्तिरेव शक्तिपातपदव्यपदेश्या, तस्य च क्षणं भगवानेव जानाति। तस्य शक्तिपातस्य पुरुषकारोऽन्यो वा हेतुर्नास्ति, केवलं स्वेच्छयैव भगवाननुग्रहेण प्रेक्षते। तेन च जीवाः कर्मसाम्यं भजन्ति। सा चानुग्रहशक्तिर्जीवानामपश्चिमा तनुः, ततः परं देहबन्धविगमादिति।

त्रिपुरारहस्ये ज्ञानखण्डे सप्तमाध्याये तु निर्हेतुकमुपासनं सत्योपासनाऽपराभिधानं निष्कामकर्मापरपर्यायं च। तेनोपासितः प्रभुरुपास्तितारतम्येन कदाचिद्दययाऽनुग्रहशक्त्याविष्ट उपासकस्यार्तिं विमोचयति, कदाचिच्चोपेक्षते। चिरकालिकं च निर्हेतुकोपासनमवश्यमेव शक्तिपातहेतुः। निर्हेतुकोपासनं च ज्ञात्वा, कर्मपाकमप्रतीक्ष्य, नियतिं च स्वसंकल्परूपां विधूय, निर्हेतुकोपासनं च विज्ञाऽपन-

यनेन संप्रसाध्य शक्तिपातेन द्रुतं निःश्रेयसरूपेण फलेनोपासकं संप्रयोजयेत्। एतदेव महेशस्याप्रतिहतं स्वातन्त्र्यम्। एतच्च मृकण्डुतनये दृष्टमिति।

श्रीमत्किरणतन्त्रे तु कालवशेन कर्मसाम्यम्, ततो गुरुकर्तृकस्तीव्रशक्तिनिपातः, ततो दीक्षा, तया सर्वज्ञशिवरूपताप्राप्तिरिति। तदुक्तम्—

"समे कर्मणि संजाते कालान्तरवशात्ततः।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा॥
सर्वज्ञः स शिवो यद्वत्" इति।

शक्तिपातस्य फलानि लिङ्गानि च मृगेन्द्रतन्त्रे पञ्चमपटले इत्थं निरूपितानि— तमोरूपस्य मलस्य वामाख्याया भगवच्छक्तेश्च योऽसावधिकारो जीवन्यग्भावनव्यापृतत्वम्, तस्य विरामाज्जीवस्य कैवल्याभिमुखीभावः। तदुक्तं श्रीमत्स्वायम्भुवे—"क्षीणे तस्मिन् यथा सा स्यात् परं निःश्रेयसं प्रति" इति। अस्यार्थः—तस्मिन् तमसो भगवच्छक्तेश्च न्यग्भावनरूपे व्यापारे, क्षीणे शक्तिपातरूपानुग्रहेण क्षीणे सति, जीवस्य परं निःश्रेयसं प्रति मोक्षं प्रति सा कैवल्याभिमुखीभावरूपा परिच्युतिः स्यादिति। तस्यां परिच्युतौ सत्यां जगदुद्धरणप्रवणः परमेश्वरोऽणोरात्मनो दृक्क्रियानन्त्यं प्रकटीकरोति। यांस्तु स्वापावस्थितान् परमेश्वरः शक्तिपातेनानुगृह्णाति ते तत्काल एव शिवाः संपद्यन्ते, न त्वधिकारिणो भवन्ति, तेषां मलांशानवशेषात्। तथा संहारे सृष्टौ वा यान् विमोचयति, तेऽपि सद्य एव शिवाः संपद्यन्ते। तत्र संहारे येषामधिकारवाननुग्रहस्ते तदानीं रुद्राणवः, सृष्टौ त्वधिकारिणो भवितारः। सर्गारम्भे तु साधिकारानुग्रहानुगृहीताः पतय इति परापरविद्येश्वराद्यधिकारभाजो भवन्तीति। अथ सृष्टिसंहारकालयोरश्रुतमपि कथमनुग्राह्याणां शिवत्वं लभ्यत इति चेल्लभ्यत एव, मलपरिपाकस्य परमेश्वरानुग्रहस्य चानियतकालत्वादिति।

अथानुग्रहाख्यशक्तिपातस्य लिङ्गानि—मुक्तावुत्कण्ठा, संसारद्वेषः, परमेश्वरभक्तिपरेषु भक्तिः, तच्छासके शास्त्रे श्रद्धा चेति। यत्तु कैश्चिदुच्यते—

न हृष्यत्युपकारेण नापकारेण कुप्यति।
यः समः सर्वभूतेषु जीवन्मुक्तः स इष्यते॥

इत्युपकारापकारयोश्चिन्ताया अभाव एव कैवल्यप्राप्तिकारणरूपस्य शक्तिपातस्य

लिङ्गमिति, तन्न, माध्यस्थ्यादेव तत्संभवात्। इह पुनरयं शक्तिपाते विशेषो यदधिकारवतीषु सृष्टिस्थितिसंहारभेदभिन्नासु तिसृषु मुक्तिषु उपायस्य दीक्षादेः— "लोकधर्ममयी दीक्षा शिवधर्ममयी तथा" इत्यादिना वैशिष्ट्यवर्णनादादरस्य च तत्तत्पदप्राप्तिप्रीतिश्रद्धात्मनो वैलक्षण्यात्। यथोक्तं श्रीमत्सूक्ष्मस्वायम्भुवे— "यो यत्राभिलषेद्भोगान् स तत्रैव नियोजितः। सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति। इदं च साधिकारं मुक्तित्रयं मध्यमापकृष्टभेदेन द्विविधम्। तत्र स्वस्मात् पदाच्च्युतिः संभाव्यते। तृतीया तु मुक्तिस्तत्पदाधिकारसमाप्तिसमनन्तरमेव भवति। तत्र साधिकारस्य मुक्तित्रयस्य लिङ्गचतुष्टयं तु प्रागुक्तमेव।

शतरत्नसंग्रहे मतङ्गसूत्रमनुसृत्य शक्तिपातस्य प्रयोजनमुक्तम्। तथाहि—शक्तिपातेनानित्याशुचिदुःखानात्मभूतायाः प्रकृतेरन्योऽहं चेतनात्मकः पुरुषः स्वतोऽवभासमानः परमेश्वराधीन इत्येवं विवेकेन युक्ता बुद्धिरकस्माज्जायते। तत्र शक्तिपातातिरिक्तं कारणं नास्ति। तादृशे च विवेके जाते वैराग्यमुपजायते, वैराग्याच्चेश्वरपुरुषविषयकज्ञानेच्छारूपा जिज्ञासा प्रधानात्मकसंसारनिवृत्तिहेतुरुत्पद्यते। तादृशजिज्ञासायुक्तं च चैतन्यं पशुं संसारसागरादुद्धर्तुं भगवानाचार्यप्रेप्सोत्पादनद्वाराचार्यं प्रति प्रेरयति। किञ्च, प्रेरको भगवानेवानुग्राह्यस्य शिष्यस्य विनयेऽनुग्राहकस्य चाचार्यस्य कारुण्ये हेतुरित्येवमाचार्यशिष्ययोरनुग्राह्यानुग्राहकभावरूपसंबन्धसम्पादक इत्युक्तम्। अग्रे च तत्रैव शक्तिपातासंभवमाशङ्क्य समाहितम्। तथाहि—ननु शक्तेः कथं निपातः? तस्या व्यापकत्वात्, व्यापकस्य वस्तुनश्च्युतिलक्षणनिपातायोगात्, अग्नेरुष्णत्ववत् शिवसमवायिन्यास्तस्याः शिवात् च्युत्ययोगाच्च। किञ्च, नित्यव्यापकशक्तेः सर्वथा सर्वकालं पश्वात्मसु स्थितत्वाद् युगपन्मुक्तिप्रसङ्गः। न च सा शक्तिः कस्मिंश्चिद् विशिष्टकाल एवानुग्रहकारिणीति वाच्यम्, तर्हि कालस्यैव मोक्षकर्तृत्वापत्तेः, शिवेन प्रयोजनाभावप्रसङ्गाच्च। अतः कथं शक्तिपात इति चेन्मैवम्, द्विधा हि शब्दानां प्रवृत्तिः—गौणी, मुख्या च। अत्र पातशब्दप्रवृत्तिर्गौणी। यथा लोकेऽस्य दृष्टिरस्यां कामिन्यां पतिता दृश्यते, किन्तु दृश्यदर्शकसम्बन्धमात्रेण सम्बन्धाद् दृष्टिः पतितेत्युपचर्यते, तद्वदिहास्मिन् पुंस्यप्यनुग्राह्यानुग्राहकत्वलक्षणसंबन्धेन संबन्धात् शक्तिः पतितेत्युपचारेणोक्ता न मुख्यत इत्यदोषः। अयमेवार्थः शङ्कोत्तरया किरणागमे स्पष्टं प्रतिपादितः।

वस्तुतस्तु नित्यव्यापकशिवशक्तेराविर्भाव एव शक्तिपात इत्यवधेयम्। शक्तिपाते जाते निःश्रेयसप्राप्तिकामः पुरुषः शिवेच्छयाऽधिगतं गुरुमेवानुप्राप्य दीक्षाविच्छिन्नमलत्रयबन्धनो मुच्यत इत्येष क्रमः। तदुक्तं वरुणापद्धत्याम्—"क्रियया वाऽथ शक्त्या वा दीक्षा सा सर्वतो मता। दीक्षया मुच्यते देही त्रिविधाद्भवबन्धनात्॥" इति। तथा चिन्त्यविश्वे—"दीक्षयित्वा विधानेन षट्त्रिंशत्तत्त्वकोपरि। निष्कले निर्मले तत्त्वे योजयत्येव निश्चयः॥" इति। एवं च दीक्षाया एव मोक्षहेतुत्वं न तु ज्ञानादीनाम्, तेषां दीक्षाङ्गत्वेन श्रवणात्, शिवविषयस्य योगादेर्दीक्षया विनाऽनुपपत्तेः, मलस्य च द्रव्यत्वेन चक्षुःपटलादिवज्ज्ञानमात्रेण निवृत्त्यभावात्, चक्षुर्वैद्यव्यापारेणेव दीक्षाख्येनेश्वरव्यापारेणैव निवृत्तिसिद्धेश्च।

सा च दीक्षा किंस्वरूपेति प्राप्ते उच्यते—पशूनां पशुत्वक्षयकरी ज्ञानेन शिवत्वदायिका च शिवशक्तिरेव दीक्षा। तथा च तन्त्रालोकप्रथमाह्निके ४४ श्लोकव्याख्यावसरे समुद्धृतं वचनम्—

दीयते ज्ञानसद्भावः क्षीयते पशुवासना।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता॥ इति।

नन्वेवं सति शिवस्य स्वशक्तिदानेन शक्तिदारिद्र्यमापद्येतेत्याशङ्क्य मतङ्गसूत्रानुसारेण समाहितं शतरत्नसंग्रहे—

दानं नाम स्वसत्तैव या सा ज्ञानक्रियात्मिका।
सा शक्तिस्तस्य संस्पर्शाद् व्यक्तीभूता सुनिर्मला॥
पत्युर्दानं तदेवोक्तं न स्वयं व्यज्यते पशोः। इति।

तन्त्रसारे तु द्वादशाह्निके दीक्षाङ्गत्वेन स्नानं निरूपितम्। स्नानं च शुद्धता उच्यते, शुद्धता च परमेश्वरस्वरूपसमावेशः। कालुष्यापगमो हि शुद्धिः, कालुष्यं च तदेकरूपेऽप्यतत्स्वभावरूपान्तरसंवलनाभिमानः। तदिह स्वतन्त्रानन्दचिन्मात्रसारे स्वात्मनि विश्वत्रापि वा तदन्यरूपसंवलनाभिमानोऽशुद्धिः। सा च महाभैरवसमावेशेन व्यपोह्यते। स च स्नानरूपः परमेश्वरसमावेशोऽष्टधा क्षितिजलपवनहुताशनाकाशसोमसूर्यात्मरूपास्वष्टासु मूर्तिषु मन्त्रन्यासमहिम्ना परमेश्वररूपतया भावितासु तादात्म्येन च देहे परमेश्वरसमाविष्टे शरीरादिविभागवृत्तेश्चैतन्यस्यापि परमेश्वरसमावेशप्राप्तिः। दीक्षाविधिश्च सामयिकविधिः, पुत्रकदीक्षाविधिः, उत्क्रमण-

दीक्षाविधिः, परोक्षदीक्षाविधिरिति बहुधा वर्णितस्त्रयोदशाह्निकमारभ्य सप्तदशाह्निकात् प्राग् विस्तरेण तन्त्रसार इति तत एव द्रष्टव्यः।

इह यद्यपि सर्ववादिनां मोक्ष एवोपादेयः, तत्प्रतिपक्षभूतः संसारश्च हेयः। तस्य च मिथ्याज्ञानं निमित्तम्। तत्प्रतिकूलं च तत्त्वज्ञानमिति तत्साक्षात्कारेणैवाज्ञानापगमान्मोक्षावाप्तिरित्यत्र न विवादः। पूर्वोक्तरूपया दीक्षया मलत्रयरूपज्ञानप्रक्षयो ज्ञानप्रदानं चेति सर्वतन्त्रसिद्धान्त इति ज्ञानाज्ञानयोः स्वरूपं साम्प्रतं निरूप्यते। तत्राज्ञानं तावद् बन्धकारणम्। तद् द्विविधम्—बौद्धं पौरुषं चेति। तत्र बुद्धिगतमनिश्चयस्वभावं विपरीतनिश्चयात्मकं च। पौरुषं तु विकल्पस्वभावं संकुचितप्रथात्मकम्। तदेव तु मूलकारणं संसारस्येति। एवं ज्ञानमपि द्विविधम्—बौद्धं पौरुषं चेति। तत्राध्यवसायात्मकं बुद्धिनिष्ठमेव ज्ञानं प्रधानम्, तदेव चाभ्यस्यमानं पौरुषमप्यज्ञानं निहन्ति, विकल्पसंविदभ्यासस्य विकल्पान्ततापर्यवसानात्। विकल्पासंकुचितसंवित्प्रकाशरूपो ह्यात्मा शिवस्वभाव इति सर्वथा समस्तवस्तुनिष्ठं सम्यङ्निश्चयात्मकं ज्ञानमुपादेयम्। तच्च शास्त्रपूर्वकम्। शास्त्रं च परमेश्वरभाषितमेव प्रमाणम्। तथा चेदं फलितम्—यद्यपि बौद्धं ज्ञानं बौद्धमेवाज्ञानं निवर्तयति, तदेव त्वभ्यस्यमानं पौरुषज्ञानसमुत्पादक्रमेण पौरुषमज्ञानं निहन्ति। तथा च पौरुषज्ञानमेव पौरुषाज्ञानस्य निवर्तकम्। पौरुषज्ञानं च पूर्णप्रथारूपं ज्ञानमात्रस्वभावम्। अख्यात्यभाव एव हि पूर्णा ख्यातिः, सैव च प्रकाशानन्दघनस्यात्मनस्तात्त्विकं स्वरूपम्, तत्प्रथनमेव मोक्षः। ज्ञानं मोक्षकारणमिति तु बन्धनिमित्तस्याज्ञानस्य विरोधकत्वात्। नहि प्रथमानपूर्णात्मरूपस्य मोक्षस्य नित्यस्यान्यथा ज्ञानकार्यता संभवति। तदुक्तम्—

"मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः। स्वरूपं चात्मनः संवित्" इति।

स्वतन्त्रात्मातिरिक्तस्तु तुच्छोऽतुच्छोऽपि कश्चन।
न मोक्षो नाम तन्नास्य पृथङ्नामापि गृह्यते॥ इति।

(तन्त्रालोकप्रथमाह्निके १५६ श्लोकः)

तदेवं शक्तिपाते सति दीक्षया ज्ञानरूपयाऽज्ञाननिवृत्तिक्रमेण मुक्तिर्भवतीति प्राङ्निर्धारितम्। दीक्षां विना तु कदापि न मुक्तिरित्यागमसिद्धान्तः। यत्तु—

तस्य दीक्षां विनैवात्मसंस्कारपरिणामतः।

सम्यग्ज्ञानं भवेत् सर्वशास्त्रेषु परिनिष्ठितम् ॥

इति वचनं तद्बाह्यक्रियादीक्षानिषेधाभिप्रायेण, न तु सर्वथा दीक्षाया निषेधोऽत्राभिप्रेतः, आगमश्रुतिविरोधात् ।

दीक्षाऽपि तीव्रातीव्रशक्तिपाततारतम्येन द्विविधा । तत्र तीव्रतमशक्तिपातादावनुपायादिक्रमेण दीक्षा भवेद् येनास्य पशोस्तत्कालमेवापवर्गः । तदुक्तम्—"तत्संबन्धात्ततः कश्चित्तत्क्षणादपवृज्यते" इति । अतीव्रशक्तिपातादौ तूपायादिक्रमेण दीक्षा भवति । उपायाश्च त्रिविधाः—शाम्भवशाक्ताणवभेदात् । एतत्त्रयमपीच्छाज्ञानक्रियात्मकत्वेन त्रिविधम् । तत्र शाम्भव उपायः—उच्चारकरणध्यानवर्णस्थानप्रकल्पनाहीनस्य पशोर्यो गुरुणा प्रतिबोधितः शिवे आवेशः शिवसमापत्तिरूप उत्पद्यतेऽसौ शाम्भवः, इच्छाशक्त्यात्मकश्चित्तप्रलयरूपश्च । यत्तु उच्चाररहितं चेतसा वस्तुध्यानमात्रं तेन यः शिवसमावेशोऽसौ शाक्तः, ज्ञानशक्त्यात्मकश्चित्तसंबोधरूपश्च । उच्चार-देहकरणध्यान-वर्णस्थानप्रकल्पनैर्यः शिवे समावेशः स आणवः, क्रियाशक्त्यात्मकश्चित्तविश्रान्तिरूपश्च । तत्र शाम्भवोपायसाध्यं ज्ञानमभेदप्रधानम् । शाक्तं च ज्ञानं भेदाभेदप्रधानम् । आणवं तु भेदप्रधानमिति । तदुक्तम्—

तन्त्रं जज्ञे रुद्रशिवभैरवाख्यमिदं त्रिधा ।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते ॥
भेदेन भेदाभेदेन तथैवाभेदभागिना । इति ।

तथा च तीव्रतमशक्तिपातोत्तरदीक्षयाऽनुपायादिक्रमेण पौरुषाज्ञाननिवृत्तौ तत्कालमेवापवर्ग इति । अतीव्रशक्तिपाते तूपायादिक्रमेण दीक्षया बौद्धज्ञानेन बौद्धमज्ञानविजृम्भितं यदा विलीयते, तदा जीवन्मुक्तिरिति सिद्धान्तः । तदेवं शक्तिपात एव परमनिःश्रेयसस्य प्रथमं सोपानम् । यद्यप्यत्र सर्वं तन्त्रालोक-तन्त्रसार-रत्नत्रय - मालिनीविजयोत्तरतन्त्र मृगेन्द्रतन्त्र - शतरत्नसंग्रहत्रिपुरारहस्यज्ञानखण्डाहिर्बुध्न्यसंहिता-लक्ष्मीतन्त्राद्यालोचनेन विमृष्टम्, तथापि समासेनैव । अत एषु विषयेषु स्फुटीकरणाय व्यासोऽपेक्ष्यते । किञ्चान्येऽपि बौद्धजैनागमोक्ता विषयाः समयाल्पत्वादिना निबन्धविस्तरभयेन च नालोचिता इति तेऽपि सत्यवसरे समालोचयिष्यन्त इत्यलं बहु जल्पितेन ।

यच्छक्तिपातलेशेन विश्वं स्फुरति मद्धृदि ।
तस्मै नमो मे सततं शिवाय गुरुमूर्त्तये ॥ इति शम् ॥

---

# सिद्धहेमचन्द्रशब्दानुशासनम्

श्रीकालिकाप्रसादशुक्लः, वा० सं० विश्वविद्यालयेऽनुसन्धानसहायकः ।

देशेऽस्मिन् शताब्दीर्यावद् मेधाविनः शाब्दिकशार्दूलाः शब्दविद्यावगमाय विज्ञानसरणीसमन्वितानि तानि तानि शब्दशास्त्राणि निरमासिषुरिति नापरोक्षं प्रेक्षावताम् । अमीषां शब्दशास्त्राणां सामर्थ्येनैव संस्कृतभाषा परमाममरतां भजति । किं बहुना, वैदेशिकैरपि विद्वद्भिः शब्दशास्त्रस्यास्य स्वस्मिन् भाषाशास्त्रेऽतीवोपयोगो व्यधायीति केषां सुमनसां विदितचरं नास्ति । व्यवस्थितस्य भाषाशास्त्रस्य दारिद्र्याद‍नेका भाषा विलयं गता दुरवगमार्थतां वा प्राप्ताः । संस्कृतभाषा शाब्दिकानां निःसीमानुकम्पया संस्कृतं वाङ्मयं परप्रहारशतानि सोढ्वापि जीवत् सत् सुतरां सुगमतां गच्छति । भाषां स्थिरयितुं व्यवस्थापयितुं वा प्रातिशाख्यादिषु प्राचीनतमग्रन्थेषु निर्दिष्टेषु संकेतितेषु सम्प्रति स्वसत्तामासादयत्सु चानेकेषु शब्दानुशासनेष्वन्यतमं श्रीसिद्धहेमशब्दानुशासनम्, यदधिकृत्यात्र किञ्चित् प्रस्तूयते ।

## निर्माणोद्देश्यम्

सत्यपि सर्वाङ्गसम्भृते पाणिनीये शब्दानुशासने कोविदकुलकैरवकलाधरस्य भोजराजस्यानवद्यविद्याजनितां कीर्तिकौमुदीमंशतोऽप्यधिगन्तुमभिलषतो गूर्जरनरेशस्य श्रीसिद्धराजस्य महत्त्वाकाङ्क्षापूर्तिरेवास्य निर्माणोद्देश्यमितीतिवृत्तपर्यालोचनेनाध्यवसातुं शक्यते । यद्यप्येतदितिवृत्तं प्रकाशयितुं जैनाचार्याणां सन्त्यनेके ग्रन्थास्तथापि श्रीप्रभाचन्द्रसूरिविरचितं 'प्रभावकचरित्रम्'[१] ऐतिहासिकदृष्ट्या सर्वमतिशेते इत्यत्र नास्ति शङ्कापङ्कावकाशः । प्रभावकचरित्रमुद्दिश्य सम्पादकोऽपि—"रचनादृष्ट्याऽपि ग्रन्थोऽयमत्यन्तं महत्त्वमादधाति । अस्य भाषा प्रवाहपूर्णा सती प्रभावप्रसन्नाऽस्ति । वर्णनं सुसम्बद्धं सुपरिमितञ्चास्ति । कुत्राप्यतिशयोक्तिरसम्भवोक्तिर्वा न दृष्टिगोचरीभवति । समग्रेऽपि संस्कृतसाहित्ये महाकवीनां प्रभावशालिनां धर्मा-

१. रचनाकालः—वि० सं० १३३४, चैत्रशुक्लः शुक्रवासरः ।

चार्याणां,चैतिहासिकवर्णनकर्त्तॄ ईदृशोऽन्यो ग्रन्थो नोपलभ्यते[१] " इत्यादि स्वाशयं हिन्दीभाषया व्यञ्जन् प्रभावकचरित्रस्यैतिहासिकत्वं सुतरां स्वीकृतवान् ।

तत्र हि—यदा महाराजः सिद्धराजो विजित्य मालवमण्डलं स्वराजधानीं पाटनपुरीं प्रविष्टस्तदा धारानगरस्य सकलसम्पदा सह भोजराजस्य ग्रन्थरत्नराशिमपि समानायितवान् । तस्मिन्नेवावसरे विविधविद्वद्वृन्दारकवन्दितेन श्रीहेमचन्द्राचार्येण प्रदत्ताम्—

भूमिं कामगवि ! स्वगोमयरसैरासिञ्च रत्नाकराः !
मुक्तास्वस्तिकमातनुध्वमुडुप ! त्वं पूर्णकुम्भो भव ।
धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा-
न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः ॥

इत्याशिषं शिरसा गृहीत्वा राजा पुनरागमनाय सम्प्रार्थ्य चाचार्यं विसृष्टवान् ।

अन्यदा नियुक्तकैरवन्तिकोशीयपुस्तकेषु प्रदर्श्यमानेषु लक्षणपुस्तकमेकं समवलोक्य किमेतदिति भूमिपालेन पृष्टास्ते भोजव्याकरणमेतदिति व्यजिज्ञपन् । विशेषतश्च तैर्निवेदितं यदसौ मालवाधीशो विद्वन्मण्डलमण्डन आसीत्, तेन च शब्दतर्कालङ्कारप्रभृतीन्यनेकानि शास्त्राणि रचितानि सन्ति । सर्वमेतदाकर्ण्य विषीदन् भूमिपालोऽवदत्—'किं नास्मत्कोशे शास्त्रपद्धतिः । कथं विश्वेऽपि गूर्जरे देशे कोऽपि विद्वान् नास्ति' इति ।

ततश्चाखिला अपि राजपण्डिता हेमचन्द्राचार्यं व्यलोकयन्, समयज्ञेन राज्ञाऽपि समभ्यर्च्यासौ प्रार्थितो यत् मुने ! नवीनमेकं शब्दानुशासनं निर्मायास्मन्मनोरथं पूरय, ऋते त्वां नान्यः कश्चनात्र समर्थोऽस्ति । सम्प्रति देशोऽयं मदीयः कामं संक्षिप्तं कलापव्याकरणमवलम्बते । भूयो भूयः परिशीलितादपि तस्मात् सम्यक् शब्दव्युत्पत्तिर्न भवति । पाणिनिव्याकरणं वेदाङ्गमस्तीति ब्राह्मणा अन्यानवमन्यन्ते । अतो मुनिनायक ! विश्वविश्वोपकाराय नवं व्याकरणं कुरु । अनेन मम यशो तव च ख्यातिर्भविष्यतीति ।

भोजराजस्य पुस्तकराशिं पश्यता सिद्धराजेन भोजनामाङ्कितं व्याकरणपुस्तकं समवलोक्य व्याकरणादतिरिक्ता अप्यनेके ग्रन्था निबद्धास्तेनेति श्रुत्वा च विचारितं

१. सिन्धीयजैनग्रन्थमाला, ग्रन्थाङ्कः १३, प्रभावकचरित्रस्य प्रास्ताविकं वक्तव्यम्, पृ०६ ।

भवेद् यदहो! मदीये गूर्जरे देशे वैभवमस्ति, तद् भोक्तुं विलासस्थानानि सन्ति, सम्पत्सरितोऽबाधगत्या प्रवहन्ति, विद्याधामानि सन्ति, विद्याव्यवसायिनोऽपि सन्ति, विद्वांसोऽपि सन्ति, किमेकैकप्रदर्शनेन! सर्वमस्ति, नहि, नहि, सर्वमस्ति किन्तु स्वतन्त्रं साहित्यं नास्ति देशेऽस्मिन्मदीये। परकीयं साहित्यमेवादाय वयं जीवामः। अन्यदीयसाहित्यपरम्पराशृङ्खलां छित्वा मदीयो देशः स्वकीयसाहित्यप्राणैः प्राणवान् भवेत्तथा किमप्याचरणीयम्। राजानो गमिष्यन्ति, तेषामधिकारोऽपि परायत्तो भविष्यति, राज्याधिकारिणोऽपि नियतिनियन्त्रिता भविष्यन्ति, राज्यनियमा अपि परिवर्त्तिता भविष्यन्ति। राजवैभवविलासा विलयं प्राप्स्यन्ति, निखिलनाशकसाधनानि शान्ति समेष्यन्ति। किम्बहुना सर्वं प्रयास्यति, परन्तु संस्कृतिः साहित्यञ्च शेषं गमिष्यतः। अवशिष्टे ते अतीतकालिकं भव्यमितिहासं निर्मास्यती रमणीयां रचनां विधाय गूर्जरगौरवं गापयिष्यतः। नैतावदेव, अपि तु सूर्यचन्द्रवद् गूर्जरयशस्तेजो दिगन्तव्यापि भविष्यति। गूर्जरनरेशस्येयं महत्त्वाकाङ्क्षा श्रीहेमचन्द्राचार्यस्य मनःसरसि रचनारसं भावितवती। स च रसः श्रीसिद्धहेमचन्द्रशब्दानुशासनाभिधमक्षरदेहस्वरूपं धृतवान्।

अस्या नूतनाया रचनाया भावनया भावितस्य गूर्जरनरेशस्याशयं प्रकटयताऽऽचार्येण ग्रन्थस्यास्य प्रशस्तौ प्रतिपादितमस्ति यत्—

तेनातिविस्तृतदुरागमविप्रकीर्णशब्दानुशासनसमूहकदर्थितेन।
अभ्यर्थितो निरुपमं विधिवद् व्यधत्त शब्दानुशासनमिदं मुनिहेमचन्द्रः॥ ३५॥

अत्रायमभिसन्धिः—मालवाधिपतिर्भोजो व्याकरणनिर्माताऽऽसीत्, स्वदेशे स्वमेव व्याकरणं प्रचारयन्नासीत्। भोजव्याकरणमेव विद्याभूमौ गूर्जरे स्वसाम्राज्यं प्रतिष्ठापयदासीदिति कीर्तिकामुको राजा स्वदेशे स्वव्याकरणस्य न्यूनतया व्यथितमना भवेत्। राज्ञोऽयमप्याशयः प्रतीयते यत्—मम पुस्तकालये ईदृशी शास्त्ररचना नास्ति। सम्प्रति विभिन्नेषु देशेषु तानि तानि व्याकरणानि तैस्तैः पण्डितै रचितानि सन्ति, तेषामेव च तत्र प्रचारो भवति। अतो मदीयेऽपि देशेऽत्रत्यैर्विपश्चिद्भिर्निबद्धेन सर्वाङ्गसम्भृतेन शास्त्रेण गूर्जरवास्तव्या गौरवं समादधीरन्निति व्यापकव्यथया व्यथितो भवेत्।

मालवदेशो यथा विविधवैभवविभूषित आसीत्तथैव विशिष्टनिबन्धैस्तद्रचयितृभिरपि सम्भृत आसीत्, किन्तु मदीयो देशः सकलसम्पत्तिसम्पन्नः सन्नपि साहित्येन साहित्यनिर्मातृभिश्च समृद्धः कथन्न भवेदित्यभिलाषाकुलितो भवेत्।

विद्यासम्पादनावसरे परकीयसाहित्येन पराधीनतया जीवनं यापयतो गूर्जरान्तेवासिनो विलोक्य, स्वल्यायुषि अतिविस्तृतादपर्याप्तात् सत्यपि परिश्रमेऽपेक्षितावबोधे कृपणाच्च शब्दानुशासनान्तरात् त्रस्यतां विद्यार्थिनिवहानां त्रासं समूलमुन्मूलयितुं प्रयतमानोऽवनीपतिर्गूर्जरगौरववर्द्धनभावनादोलान्दोलितो भवेत्। इदं निखिलमपि रहस्यं 'कदर्थितेन' इतिपदेनोद्भावयितुं शक्यते। नैतावदेव, किन्तु नवीनसाहित्यं निर्मातुं नरेशस्य प्रेरणातो लक्ष्मीकान्तं नीवृतं साहित्यसमृद्धं भावयितुं भावनया साकं गूर्जरदेशस्य तन्निवासिनाञ्च गौरवशालित्वेन जीवननिर्वाहस्य विविधानि सत्यानि प्रादुर्भवन्ति। अतो राजाऽनेकधन्यवादार्हः। पूर्वापरसम्बन्धपर्यालोचने नैतत्पद्यार्थाविख्यानेन महतोऽस्य ग्रन्थस्य परिशीलनेन चोपर्युक्तस्तदतिरिक्तश्चानेकविधोऽर्थो व्यज्यते। किन्तु प्रशस्तिप्रस्तुतान् त्रीन् दोषान् दूरीकर्त्तुमेवास्य शब्दानुशासनस्य निबन्धनमभूत्, इत्ययमर्थो विशेषतः सङ्गच्छते इत्यत्र नास्ति विप्रतिपत्तिलेशः।

सम्प्रति समुलभ्यमानानि निखिलानि शब्दानुशासनान्यतिविस्तृतविप्रकीर्णदुरागमत्वादिदोषदूषितानि सकलशाखाऽसंभृतानि अतोऽपर्याप्तानि सन्तीति यदि प्रमाणितम्भवेत्तर्हि शब्दानुशासनमिदं 'सकलस्यापि भारतवर्षस्य प्रधानतमं व्याकरणम्' इति मुक्तकण्ठं प्रतिपादयितुं शक्येत। नैतावदेव, किन्तु विद्वद्भोग्यकृतेरस्याः परां प्रतिष्ठां परिचित्य रचनापरिपाटीपटुतावर्जितमनोभिः सुमनोभिः 'कलिकालसर्वज्ञ' समुचितोपाधिनाऽमुं व्याकरणकर्त्तारं विभूष्य स्वकीया गुणज्ञता प्रकाशिताऽस्ति। यतो हि असन्दिग्धं लोकेऽस्मिन्नुच्चैर्निर्भयमुच्यते। शब्दानुशासनस्यास्य त्रिविधदोषराहित्यं श्रीमदमरचन्द्रसूरिणापि स्वकृतायां [1]बृहदवचूर्णौ—"शब्दानुशासनजातमस्ति, तस्माच्च कथमिदं प्रशस्यतरमिति ? उच्यते—तद्धि अतिविस्तीर्णं विप्रकीर्णञ्च। कातन्त्रं तर्हि साधु भविष्यतीति चेन्न, तस्य संकीर्णत्वात्, इदं तु सिद्धहेमचन्द्राभिधानं शब्दानुशासनं नातिविस्तीर्णम्, न विप्रकीर्णम्, न च संकीर्णमिति। अनेनैव शब्दव्युत्पत्तिर्भवति" इति प्रतिपादितम्।

---

१. देवला० जैनपु० निधिद्वाराप्रकाशितम्, ग्रन्थाङ्कः ६२, पृ० ३, पङ्क्तिः १८ तः २०

## शब्दानुशासनजातस्य दोषत्रयकलङ्कितत्वम्

यस्मिन् प्रकरणे विषयं विशदयितुं द्वित्रैः सूत्रैः कार्यं निरुह्यते तत्र सूत्रसमवायसम्पादनं कार्यकौशलं नास्ति। हेमशब्दानुसासनं विहायान्यस्मिन् व्याकरणे विषयविभागदृष्ट्यातिविस्तृतत्वदोषः स्थाने स्थाने दृष्टिगोचरीभवति। व्याकरणेऽर्द्धमात्रागौरवं दोषाय कल्पतेऽत एव प्रत्येकं वैयाकरणैः दोषादस्मात् त्रातुं स्वस्वमत्यनुसारेण प्रयत्नोऽवश्यमेवानुष्ठीयत इति 'अर्द्धमात्रालाघवमपि पुत्रोत्सवाय मन्यन्ते वैयाकरणाः' उक्तिरियं वैयाकरणेषु प्रचलिता प्रतीयते।

संक्षिप्तवचनपरिकल्पितेन प्रकरणेन परिमिताक्षरनिर्मितेन सूत्रेण च प्रतिपाद्यो विषयोऽर्थश्च यदि निश्शेषतयाऽवगन्तुं शक्येयातां विवक्षितञ्च किञ्चिन्नावशिष्येत तदैव रचना गुणाय कल्पतेऽतिविस्तृतत्वदोषञ्चोन्मीलयितुं प्रभवति। दुर्बोधैः संक्षिप्तवचनैः संभृतेन प्रकरणेनातिविस्तृतत्वदोषं दूरीकुर्वतो रचयितुः शिरसि दुरागमकलङ्कपङ्कपतनात् 'अजे निष्कास्यमाने उष्ट्रः प्रविष्टः' लोकोक्तिरियं सार्थकीभवति।

सूत्राणां रचना कठिनशब्दैः कृता भवेत्, तेषां व्याख्यानं कठिनशब्दैः कठिनशैल्या च सम्पादितम्भवेत्, पुनः पुनर्विचार्यमाणोऽपि विषयो ज्ञातो न भवेत्, यदि तथाविधो लेखो भवेत्, सूत्राणामर्थबोधाय वृत्तिर्लिखिता भवेत् तस्या एव बोधे चानेका संशीतिः समुत्पद्येत, यो हि विषयः सरलतया ज्ञातुं शक्येत तमवगन्तुं काठिन्यमाचरितम्भवेत्, कठिनश्च विषयः स्पृष्टो न भवेदित्येवमादिभिरव्यवस्थाभिर्व्याकरणं दूषितं भवतीति वक्तुं योग्यमस्ति। दोषस्यास्य निरासाय पठनसमकालमेव यथा बोधो भवेत्तथा शैली यदि स्वीकृता भवेत्, कठिनोऽपि विषयः सरलतया वर्णितो भवेत्तदा दुरागमदोषनिर्मुक्तं व्याकरणं भवितुमर्हेत्।

प्रत्येकं विषयं स्पष्टयितुं सूत्राणि श्रृङ्खलावयवा इव परस्परं सम्बद्धानि भवेयुः, सूत्रसमन्वयसमये पूर्वसूत्रेभ्योऽनुवृत्तानि अधिक्रियमाणानि वा पदानि विना बुद्धिव्यायाममुपस्थितानि स्युः, सूत्रस्थितपदविवरणसम्पादकानि उदाहरणानि भागीरथीप्रवाहवदस्खलितगत्योपस्थाय विषयं प्रकाशयेयुः, सूत्राणामुद्देश्यतावच्छेदकैराक्रान्तानि तावन्त्येव स्थलानि न तदतिरिक्तानीति निवेदकानि प्रत्युदाहरणानि क्रमेण पदप्रयोजनपारमार्थिकतां निवेदयेयुः, उदाहरणप्रत्युदाहरणज्ञानपूर्वकं साक्षात् परम्परया वा

ध्वन्यमानैतिहासिकप्रभृत्यनेकविषयाणां ज्ञानं सम्पादितम्भवेत्, नैतावदेव, किन्तु पठनपाठनकाले विना व्याकुलतां विषयः स्पष्टो भवेत्, यावदपेक्षितं तावदेव सूक्ष्मेक्षिकया संगृहीतम्भवेद् येन सन्तोषसन्ततिः समुत्पन्ना भवेत्; तदेव व्याकरणस्य व्याकरणत्वम् । सर्वमेतद् विशिष्टतमे शब्दानुशासनेऽस्मिन् पर्याप्ततया वर्तत इत्यत्र नास्ति शङ्कापङ्कावकाशः । यद्येकविषयप्रतिपादनावसरेऽपरविषयप्रतिपादनं भवेत् यथा सन्ध्यवसरे तद्विधायकसूत्रस्थाने समासविधायकसूत्रसम्पातो भवेत्, नामप्रकरणावसरे तदुपयोगिसूत्रस्थाने कारकसूत्राणि समागच्छेयुः, कारकप्रसङ्गे च षत्वणत्वसमासविधायकसूत्राणामुपस्थितिर्भवेत्, तदा विद्यार्थिभिर्महत् काठिन्यमनुभूयेतेत्यत्र नास्ति मतद्वयस्यावकाशः ।

सम्प्रति प्रत्येकं शब्दानुशासनेषु उपरिनिर्दिष्टो दोषः स्वल्पतयाऽधिकतया वा समुपलभ्यत इत्यत्र मनाग् विहङ्गमावलोकनं कार्यम्—

पाणिनीये व्याकरणेऽतिविस्तृतत्वदोषः—"उपदेशेऽजनुनासिक इत्" १।३।२।, "हलन्त्यम्" १।३।३।, "अदर्शनं लोपः" १।१।६०।, "तस्य लोपः" १।३।६। एभिश्चतुर्भिः सूत्रैः पाणिनीये व्याकरणे यत् कार्यं निरुह्यते, तदेव कार्यं हैमव्याकरणे "अप्रयोगीत्" १।१।३७। इत्येकेनैव सूत्रेण सम्पाद्यते ।

अग्रे कारकप्रकरणे च पाणिनिना "ध्रुवमपायेऽपादानम्" १।४।२४। इत्यनेन अपादानकारकस्य व्यवस्था कृता किन्तु सा व्यवस्थाऽपूर्णाऽऽसीदिति वक्ष्यमाणानि अन्यान्यपि सूत्राणि लिखितानि, तथापि पूर्तिर्न जातेति वार्त्तिककारेण वार्त्तिकं निर्माय सा व्यवस्था पूर्तिं नीता । तानि चेमानि—"जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्[1]" (का० वा०) । "भीत्रार्थानां भयहेतुः[2]" १।४।२५ (पा० सू०) । "पराजेरसोढः[3]" १।४।२६ (पा० सू०) । "वारणार्थानामीप्सितः[4]" १।४।२७ । (पा० सू०) । "अन्तर्धौ येनादर्शनमिच्छति[5]" १।४।२८ । (पा० सू) । "जनिकर्त्तुः प्रकृतिः[6]" १।४।३० (पा० सू०) । "भुवः प्रभवः[7]" १।४।३१ (पा० सू०) । "पञ्चमी विभक्ते[8]" २।३।४२ । (पा० सू०) । "यतश्चाध्वकालनिर्माणं तत्र

---

१. पापाज्जुगुप्सते, पापाद्विरमति, धर्मात् प्रमाद्यति । २. चौराद्बिभेति, चौरात्त्रायते ।
३. अध्ययनात् पराजयते । ४. यवेभ्यो गां वारयति ।
५. मातुर्निलीयते कृष्णः । ६. ब्रह्मणः प्रजा प्रजायन्ते ।
७. हिमवतो गङ्गा प्रभवति । ८. माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ।

पञ्चमी[९]" ( का० वा० )। अमीषां सर्वेषां सूत्रवार्त्तिकानां स्थाने हैमशब्दानुशासने "अपायेऽवधिरपादानम्" २।२।२९ इत्येकेनैव सूत्रेण कार्यं निष्पाद्यते। तथाहि "अपायश्च कायसंसर्गपूर्वको बुद्धिसंसर्गपूर्वको वा विभाग उच्यते, तेन "बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा। बुद्ध्या विभजते वक्ता तदापायः प्रतीयते॥" इत्यत्रापादानत्वं भवति। एवम् अधर्माज्जुगुप्सते, अधर्माद्विरमति, धर्मात् प्रमाद्यति; अत्र यः प्रेक्षापूर्वकारी भवति स दुःखहेतुमधर्मं बुद्ध्या प्राप्य नानेन कृत्यमस्तीति ततो निवर्तते। नास्तिकस्तु बुद्ध्या धर्मं प्राप्य नैनं करिष्यामीति ततो निवर्तते इति निवृत्त्यङ्गेषु जुगुप्साविरामप्रमादेष्वेते धातवो वर्तन्त इति बुद्धिसंसर्गपूर्वकोऽपायः। तथा चौरेभ्यो बिभेति, चौरेभ्य उद्विजते, चौरेभ्यस्त्रायते, चौरेभ्यो रक्षति; अत्र बुद्धिमान् वधबन्धपरिक्लेशकारिणश्चौरान् बुद्ध्या प्राप्य तेभ्यो निवर्तते, चौरेभ्यस्त्रायते इत्यत्रापि कश्चित् सुहृद् यदीमं चौराः पश्येयुर्नूनमस्य धनमपहरेयुरिति बुद्ध्या तं चौरैः संयोज्य तेभ्यो निवर्तयतीत्यपाय एव। अध्ययनात् पराजयते, भोजनात् पराजयते, अत्रापि अध्ययनं भोजनं वाऽसहमानस्ततो निवर्तते इत्यपाय एव। यवेभ्यो गां रक्षति, यवेभ्यो गां निषेधयति, कूपादन्धं वारयति; इहापि गवादेर्यवादिसंपर्कं बुद्ध्या समीक्ष्यान्यतरस्य विनाशं पश्यन् गवादीन् यवादिभ्यो निवर्तयतीत्यपाय एव। उपाध्यायादन्तर्धत्ते, उपाध्यायाद् निलीयते; मा मामुपाध्यायोऽद्राक्षीदिति तिरोभवति इत्यत्राप्यपायः। शृङ्गाच्छरो जायते, गोमयाद्वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायते, बीजादङ्कुरो जायते; अत्र शृङ्गादिभ्यः शरादयो निष्क्रामन्तीति स्फुट एवापायः। यदि निष्क्रामन्ति किं नात्यन्ताय निष्क्रामन्ति ? संततत्वात्, अन्यान्यप्रादुर्भावाद् वा। हिमवतो गङ्गा प्रभवति, महाहिमवतो रोहिता प्रभवति; अत्राप्यापः संक्रामन्तीत्यपायोऽस्ति। यद्यपक्रामन्ति किं नात्यन्तमपक्रामन्ति ! संततत्वाद्, अन्यान्यप्रादुर्भावाद्वा। वलभ्याः शत्रुञ्जयः षड् योजनानि षट्सु वा योजनेषु भवति; अत्र वलभ्या निःसृत्य गतानि योजनानि, गतेषु वा तेषु भवतीत्यर्थः, कार्तिक्या आग्रहायणी मासे, ततः प्रभृति मासे गते भवतीत्यर्थः; उभयत्रापायः प्रतीयते। चैत्राद् मैत्रः पटुः, अयमस्मादधिकः, अयमस्मादूनः, माथुराः

९. वनाद्ग्रामो योजनं योजने वा, कार्त्तिक्या आग्रहायणी मासे। ( सिद्धान्तकौमुदी, पृ० १८२–१८६, १९९। बम्बे सं० )

पाटलिपुत्रकेभ्य आढ्यतराः; अत्र मैत्रादयः पुंस्त्वादिना संसृष्टाः पटुत्वादिधर्मेण ततो विभक्ताः प्रतीयन्ते इति सर्वत्राप्यपायविवक्षा ।......"

भगवता भाष्यकारेणापि "ध्रुवमपायेऽपादानम्" इत्येकेन सूत्रेण पूर्वोक्तानां सूत्रवार्त्तिकानामुदाहरणानि व्यवस्थाप्य प्रत्याख्यानं कृतम् । तथा हि--"जुगुप्साविरामप्रमादार्थानामुपसंख्यानं कर्त्तव्यम् । जुगुप्सा—अधर्माज्जुगुप्सते । अधर्माद् बीभत्सते । विराम—धर्माद् विरमति, धर्मान्निवर्तते । प्रमाद—धर्मात् प्रमाद्यति । धर्मान्मुह्यति । इदं चोपसंख्यानं कर्त्तव्यम्—साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति । तत्तर्हीदं बहु वक्तव्यम् ! न वक्तव्यम्, इह तावदधर्माज्जुगुप्सते, अधर्माद् बीभत्सते इति । य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति दुःखोऽधर्मो नानेन कृत्यमस्तीति स बुद्ध्या संप्राप्य निवर्तते, तत्र'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम् । इह च धर्माद् विरमति धर्मान्निवर्तते इति, धर्मात् प्रमाद्यति धर्मान्मुह्यतीति, य एष मनुष्यः संभिन्नबुद्धिर्भवति स पश्यति–नेदं किञ्चिद् धर्मो नाम नैनं करिष्यामीति, स बुद्ध्या संप्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादानमित्येव सिद्धम् । इह च साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति यस्तैः साम्यं गतवान् भवति स एतत् प्रयुङ्क्ते[1] ।। अयं योगः शक्योऽवक्तुम् । कथं वृकेभ्यो बिभेति, दस्युभ्यो बिभेति । चोरेभ्यस्त्रायते दस्युभ्यस्त्रायत इति ! इह तावद् वृकेभ्यो बिभेति दस्युभ्यो बिभेतीति, य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति 'यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति । स बुद्ध्या संप्राप्य निवर्तते, तत्र 'ध्रुवमपायेऽपादानम्' इत्येवसिद्धम् । इह चोरेभ्यस्त्रायते दस्युभ्यस्त्रायते इति, य एष मनुष्यःप्रेक्षापूर्वकारी सुहृद् भवति स पश्यति--'यदीमं चोराः पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेश इति ।स बुद्ध्या संप्राप्य निवर्तयति । तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम्[2] । अयमपि योगः शक्योऽवक्तुम् । कथमध्ययनात् पराजयते इति ! य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति 'दुःखमध्ययनं, दुर्धरं च, गुरवश्च दुरुपचारा' इति । स बुद्ध्या संप्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम्[3] ।......अयमपि योगः शक्योऽवक्तुम् । कथं माषेभ्यो गा वारयति !' पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति ध्रुवः सस्यविनाशः, सस्यविनाशेऽधर्मश्चैव, राजभयञ्च । स बुद्ध्या सम्प्राप्य निवर्तयति तत्र

---

१. महाभाष्यम्, १।४।२। (पा० सू०) २. १।४ २५। (पा० सू०) ३. १।४।२६ (पा० सू०) ।

'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम्[१]। अयमपि योगः शक्योऽवक्तुम्। कथम् ? उपाध्यायादन्तर्धत्ते इति ! पश्यत्ययं 'यदि मामुपाध्यायः पश्यति, ध्रुवं मे प्रेषणमुपालम्भो वा' इति, स बुद्ध्या सम्प्राप्य निवर्तते, तत्र 'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम्[२]। अयमपि योगः शक्योऽवक्तुम्। कथं गोमयाद् वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायन्त इति। अपक्रामन्ति तास्तेभ्यः। यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति ! सन्ततत्वात्। अथवान्याश्चान्याश्च प्रादुर्भवन्ति[३]। अयमपि योगः शक्योऽवक्तुम्। कथं हिमवतो गङ्गा प्रभवतीति ! अपक्रामन्ति तास्तस्मादापः। यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति ! सन्ततत्वात्। अथवान्याश्चान्याश्च प्रादुर्भवन्ति[४]।"

मन्ये, हेमचन्द्राचार्येण महाभाष्यं सम्यगालोचितं भवेत्। यतो हि पूर्वोक्तसूत्राणां प्रत्याख्याने य एव पन्था महाभाष्यकारेण निर्मितोऽस्ति, स एव पन्थाः सूत्राणां लाघवे हेमचन्द्राचार्येणाश्रितो वर्तत इति द्वयोस्तोलनेन रहस्यमुद्घाटितं भविष्यति। यदि हेमचन्द्राचार्येण भाष्यं नावलोकितमभविष्यत्तदेदं लाघवमपि दुष्करमभविष्यत्। तदा पाणिनीयव्याकरणस्य महती प्रतिष्ठा महांश्च प्रचार आस्तामित्यत्र नास्ति मतद्वयस्यावकाशः। परवर्तिभिः पूर्ववर्तिनोऽनुस्रियन्त इत्यत्रापि नास्ति संशीतिलेशः। अत आचार्यस्य तथाकरणं न्यायादपेतं नास्ति, किन्तु पूर्वोक्तेषु सूत्रेष्वनुस्रियमाणोऽपि भाष्यकारः "आख्यातोपयोगे" १।४।२९ (पा० सू०) इत्यत्राचार्येण नानुसृतः। "अयमपि योगः शक्योऽवक्तुम्। कथमुपाध्यायादधीत इति ! अपक्रामति तस्मात्तदध्ययनम्। यद्यपक्रामति, किं नात्यन्तायापक्रामति ! सन्ततत्वात्। अथवा ज्योतिर्वज्ज्ञानानि भवन्ति[५]" इति भाष्यं पर्यवेक्षमाणोऽपि हेमचन्द्राचार्यः "आख्यातर्युपयोगे" २।२।७३ इति सूत्रयित्वा—"अपादानत्वेनैव सिद्धे उपयोग एव यथा स्यादित्येवमर्थं वचनम्" इति वृत्तिं तस्य लिखितवान्।

इदमत्राचार्यस्याकूतं भवेद् यत् 'नटस्य शृणोति' इत्यत्रोपयोगाविवक्षायां सत्यामपि च बुद्धिकृतापायविवक्षायां पञ्चमी मा भूदित्येतदर्थं सूत्रमावश्यकम्। किन्त्वनभिधानादेव तत्र तादृशी विवक्षा नैव स्यादिति सूत्रं मन्दप्रयोजनम्, अन्यथा पूर्वोक्तेष्वपि सूत्रेषु तादृशी काचन कल्पना कर्त्तुं दुश्शका नासीदित्याचार्येण कथङ्कारं न विभावितमिति सुधियो विभावयन्तु।

१. १।४।२७ (पा० सू०)। २. १।४।२८ (पा० सू०)। ३. १।४।३० (पा० सू०)। ४. १।४।३१ (पा० सू०)। ५. १।४।२९ (पा० सू०)।

## हैमशब्दानुशासनस्यादर्शभूतं शब्दानुशासनम्

व्याकरणं भाषाया व्यवस्थापकं नियामकं चास्ति। तत्र यद्येकस्या भाषाया अनेकानि सन्ति व्याकरणानि तर्हि तेषु पूर्वापेक्षया परेषु शब्दसिद्धिः समानैव समवलोक्यते। तत्र काचन नवीनता नैव निभाल्यते, किन्तु रचनापद्धतौ स्वीकृता सरलता कठिनता वा, सर्वदेशीयता एकदेशीयता वा, विशेषता नवीनता वा, प्रत्येकं व्याकरणेष्वंशतः पूर्णतो वोपलभ्यत इति नापरोक्षं प्रेक्षावताम्।

यद्यपि सूत्रवृत्तिपर्यालोचनेन स्पष्टमिदं प्रतीयते यत् शाकटायनव्याकरणमेवास्यादर्श आसीत्, तथापि जैनेन्द्रव्याकरणस्यापि तत्र तत्र परिलक्ष्यमाणः प्रभावः केन तिरोधातुं शक्येत। शाकटायनव्याकरणं केन प्रभावितमस्तीति निवेदयितुमवसरो नास्तीति नात्र निवेद्यते। शाकटायनशब्दानुशासनमुपजीव्य प्रवर्तमानोऽप्याचार्यो महाभाष्यस्य शाकटायनस्य च विस्तृतविषयानपि स्वल्पैः शब्दैस्तथा कौशलेन सूत्रवृत्तौ समावेशितवान्, यथा तदवगमे मनागपि मन्दता नानुभूयते। किम्बहुना, नवनीतमिव गहनविषमस्य तत्त्वं निष्कृष्य स्वल्पैः शब्दैर्निबध्नन् सूत्रवृत्तिरचनायामतिविस्तृतत्वदोषमपास्यंश्चाचार्यो नूतनरचनागौरवमावहतीव। शाकटायनव्याकरणस्य प्रथमाध्यायस्य प्रथमपादस्य विंशतिं सूत्राण्यविकलान्येव शब्दानुशासनेऽस्मिन् संगृहीतानि सन्ति[1]। यदि परिवर्तितमात्राक्षराणि सूत्राणि पर्यालोच्येरन् तर्हि

---

१. शाकटायनसूत्राङ्काः सिद्धहेमचन्द्रसूत्राङ्काः

| | शा. सू. | सि. सू. | | शा. सू. | सि. सू. |
|---|---|---|---|---|---|
| (१) अप्रयोगीत् | १।१।५ | १।१।३७ | (११) परः | १।१।४४॥ | ७।४।११८ |
| (२) आसन्नः | १।१।७ | ७।४।१२० | (१२) स्पर्धे | १।१।४६॥ | ७।४।११९ |
| (३) सम्बन्धिनां सम्बन्धे | १।१।८॥ | ७।४।१२१ | (१३) नं क्ये | १।१।६३ | १।१।२२ |
| (४) बहुगणं भेदे | १।१।१०॥ | १।१।४० | (१४) मनुर्नभोऽङ्गिरोवति। | १।१।६७॥ | १।१।२४ |
| (५) कसमासेऽध्यर्धः | १।१।११॥ | १।१।४१ | (१५) स्वैरस्वैर्यक्षौहिण्याम्॥ | १।१।८५॥ | १।२।१५ |
| (६) क्रियार्थो धातुः | १।१।२२॥ | ३।३।३ | (१६) वौष्ठौतौ समासे ॥ | १।१।८८॥ | १।२।१७ |
| (७) गत्यर्थवदोच्छः | १।१।३०॥ | ३।१।८ | (१७) इन्द्रे | १।१।९७॥ | १।२।३० |
| (८) तिरोऽन्तर्धौ | १।१।३१॥ | ३।१।९ | (१८) सम्राट् | १।१ ११३॥ | १।३।१६ |
| (९) स्वाम्येऽधिः | १।१।३४॥ | ३।१।१३ | (१९) सुचो वा | १।१।१७०॥ | २।३।१० |
| (१०) प्राध्वं बन्धे | १।१।३८॥ | ३।१।१६ | (२०) समासेऽसमस्तस्य | १।१।१७३॥ | २।३।१३ |

प्रथमाध्यायस्य द्वितीयपादस्यानेकानि सूत्राण्युपलभ्येरन्। यदि शाकटायनस्य चतुर्णामध्यायानां षोडश पादा अवलोक्येरन् तदा तुलनात्मकः कश्चन ग्रन्थ आत्मलाभं लभेत, किन्तु दिङ्मात्रमिह दर्शितम्।

सूत्रसाम्ये तद्वृत्तिसाम्यमपि निश्चितमेवास्तीति सिद्धहेमचन्द्रशब्दानुशासनस्य तत्त्वप्रकाशिका वृत्तिः, शाकटायनस्य अमोघा वृत्तिश्च परस्परं बहुत्र साम्यमाधत्त इति नापरोक्षं प्रेक्षावताम्। द्वित्राणि स्थलानि समुदाह्रियन्तेऽत्र। अमो० वृत्तिः—इह शास्त्रे उपदिश्यमानो वर्णः समुदायो वा लौकिकशब्दप्रयोगे न स इत्संज्ञो भवति। अत एव चास्य प्रयोगाभावः सिद्धः। उपदेशस्तु कार्यार्थः। एधि—एधते। शा० सू० १।१।५॥

तत्त्व० वृत्तिः—इह शास्त्रे उपदिश्यमानो वर्णस्तत्समुदायो वा यो लौकिके शब्दप्रयोगे न दृश्यते स एति—अपगच्छतीति इत्संज्ञो भवति। अप्रयोगित्वानुवादेनेत्संज्ञाविधानाच्चास्य प्रयोगाभावः सिद्धः। उपदेशस्तु धातु-नाम-प्रत्यय-विकारागमेषु कार्यार्थः। धातौ—एधि—एधते। है० सू० १।१।३७॥

अमो० वृत्तिः—बहुगण इत्येतौ शब्दौ भेदे वर्तमानौ संख्यावद्भवतः। भेदो नानात्वम्—एकत्वप्रतियोगि। बहुकः, बहुधा, बहुकृत्वः। भेदे किम्? वैपुल्ये सङ्घे च संख्याकार्यं मा भूत्। बहुगणानाऽत्यन्ताय संचक्षते इति वचनम्। अत एव भूर्यादीति निवृत्तिः। शा० सू० १।१।१०॥

तत्त्व० वृत्तिः—बहुगण इत्येतौ शब्दौ भेदे वर्तमानौ संख्यावद्भवतः। भेदो नानात्वमेकत्वप्रतियोगि। बहुकः, बहुधा, बहुकृत्वः। भेद इति किम्। वैपुल्ये सङ्घे च संख्याकार्यं मा भूत्। बहुगणौ न नियतावधिभेदाभिधायकाविति संख्याप्रसिद्धेरभावाद् वचनम्। अत एव भूर्यादिनिवृत्तिः। है० सू० १।१।४०॥

इत्थं सूत्राणां साम्ये सत्यपि वृत्तिविवरणे आचार्यस्य कौशलनिगूहनं पाणितलेन तरणितिरोधानायेत। एवं पूर्वाचार्याणामविकलान्यपि तानि तानि वचांस्याचार्यामुना परिष्कृत्य तथा निबद्धानि यथा नूतनानीव प्रतिभान्ति।

विनाऽऽयासमर्थावगमाय किञ्चित् परिवर्त्य कानिचित् शाकटायनसूत्राणि गृहीतानि सन्ति। अक्षरपरिवर्त्तनेन स्थानपरिवर्तनेन चार्थपरिवर्त्तनं न जातमित्येव कौशलमाचार्यस्य[१]।

## प्रकरणविभागः

व्याकरणेऽस्मिन्नष्टावध्यायाः सन्ति। तत्र प्रथमे उणादिसहिताः सप्ताध्यायाः संस्कृतभाषां व्यवस्थापयन्ति, अष्टमश्चाध्यायः प्राकृतापभ्रंशादिभाषानियमान् निदर्शयति। सप्ताध्यायानां सूत्रेषु स्वोपज्ञं वृत्तिद्वयम्—(१) लघुवृत्तिः, (२) बृहद्वृत्तिः—तत्त्वप्रकाशिका चास्ति। अनयोः पद्धतिः साम्यं न विजहाति।

सहैव संस्कृतप्राकृतादिभाषाव्याकरणलेखनपरिपाटी हेमचन्द्रेणैव प्रचालिता। वररुचिभामहप्रभृतिवैयाकरणविरचितप्राकृतव्याकरणस्य हेमचन्द्राचार्यविरचितप्राकृतव्याकरणस्य च रचनायां महान् भेदो लक्ष्यते। प्राकृतापभ्रंशादिभाषानिरूपणे आचार्यस्य विशिष्टं स्थानमस्तीत्यत्र नास्ति मतद्वयस्यावकाश इत्यलमप्रस्तुतप्रशंसया।

अनयोर्वृत्त्योरियानेव भेदोऽस्ति यत्—लघुवृत्तौ मतान्तराणां चर्चाया अवकाशो नास्ति, आकृतिगणस्योल्लेखो नास्ति, सूत्राणां वृत्तिर्विस्तरेण निरूपिता नास्ति, किन्तु परिगणितान्युदाहरणप्रत्युदाहरणानि तदुपयोगिन्यो वृत्तयश्च निरूपितानि सन्तीति लघुपदमन्वर्थतां भजते। बृहद्वृत्तौ च सूत्राणां विस्तरेण वृत्तिः,

---

१. शा० सू० / सि० सू०

| शा० सू० | | सि० सू० | |
|---|---|---|---|
| प्रादिर्नाप्रत्यये | १।१।२४ | न प्रादिरप्रत्ययः | ३।३।४ |
| कणे मनः श्रद्धोच्छेदे | १।१।२८ | कणे मनस्तृप्तौ | ३।१।६ |
| नित्यं हस्ते प्राणौ स्वीकृतौ | १।१।२६ | नित्यं हस्ते पाणावुद्वाहे | ३।१।१५ |
| ह्रस्वो वाऽपदे | १।१।७४ | ह्रस्वोऽपदे वा | १।२।२२ |
| प्रस्योढोढ्यूहैषैष्ये | १।१।८४ | प्रस्यैषैष्योढोढ्यूहे स्वरेण | १।२।१४ |
| एवेऽनियोगे | १।१।८७ | अनियोगे लुगेवे | १।२।१६ |
| चादेरचोऽनाङः | १।१।१०१ | चादिः स्वरोऽनाङ् | १।२।३६ |
| सौ वेतौ | १।१।१०३ | सौ नवेतौ | १।२।३८ |
| अब्धौ चोदन्वान् | १।२।६६ | उदन्वानब्धौ च | २।१।६७ |

पूर्वापरसम्बन्धः, बहुवचनादिपदानां प्रयोजनम्, मतान्तरोल्लेखः, प्रत्येकपदयथार्थता-सूचकान्युदाहरणप्रत्युदाहरणानीति संस्कृतभाषामहासरितापारप्राप्तये यावदपेक्षितं तावत्सर्वं समावेशितमस्तीति नाविदितचरं विदुषाम्।

अस्य व्याकरणस्य प्रथमः सप्ताध्यायात्मको महाविभागश्चतुर्भिर्विभागैर्विभक्तोऽस्ति—(१) चतुष्कवृत्तिः, (२) आख्यातवृत्तिः, (३) कृद्वृत्तिः, (४) तद्धितवृत्तिश्चेति।

## १. चतुष्कवृत्तिः

सन्धिः, नाम, कारकम्, समासश्चेति चतुष्कवृत्तिः। चतुष्कवृत्तेश्चत्वारो विभागा निम्ननिर्दिष्टाः सन्ति—

| अध्यायः | पादः | सूत्रसंख्या | प्रकरणम् | विभागः |
|---|---|---|---|---|
| प्रथमः | प्रथमः | ४२ | संज्ञा | प्रथमो भागः |
| ,, | द्वितीयः | ४१ | स्वरादिसन्धिः | |
| ,, | तृतीयः | ६५ | व्यञ्जनसन्धिः | |
| ,, | चतुर्थः | ९३ | नामप्रकरणम् | द्वि० भागः |
| द्वितीयः | प्रथमः | ११८ | | |
| ,, | द्वि० | १२४ | कारकम् | तृ० भागः |
| ,, | तृ० | १०५ | षत्वणत्वे | चतुर्थो भागः |
| ,, | च० | ११३ | ,, ,, स्त्रीप्रत्ययश्च | |
| तृतीयः | प्र० | १६३ | समाससामान्यनियमः | |
| ,, | द्वि० | १५६ | समासविशेषनियमः | |
| | | १०२० | | |

## २. आख्यातवृत्तिः

अत्र दशप्रकारकाः प्रत्ययाः, भावकर्मप्रक्रिया, णयन्तसन्नन्तयङन्तनामधातवः, सेडनिड्धातुविमर्शश्च समावेशिताः सन्ति। अस्मिन् द्वितीयस्मिन् विभागे निम्नलिखितानि सूत्राणि, अध्यायाः, पादाश्च सन्ति—

| | | |
|---|---|---|
| तृ० | तृ० | १०८ |
| ,, | च० | ६४ |
| च० | प्र० | १२१ |
| ,, | द्वि० | १२३ |
| ,, | तृ० | ११५ |
| ,, | च० | १२२ |
| | | ६८३ |

### ३. कृद्वृत्तिः

अत्र कृत्यप्रत्ययसम्बन्धिनो नियमा निर्दिष्टाः सन्ति। पञ्चमाध्यायस्य द्वितीयपादस्यान्तिमं सूत्रम् "उणादयः ॥५।२।६३" अस्य पूर्त्तये वृत्तिसहितानि १००६ संख्याकानि उणादिसूत्राणि पृथग् निर्मितानि सन्ति। तृतीयस्मिन्नस्मिन् विभागेऽधोनिर्दिष्टानि सूत्रपादादीनि सन्ति—

| | | |
|---|---|---|
| पञ्चमः | प्र० | १७४ |
| ,, | द्वि० | ६३ |
| ,, | तृ० | १४१ |
| ,, | च० | ६० |
| | | ४६८ |

### ४. तद्धितवृत्तिः

अत्र तद्धितप्रत्ययाः, समासान्ताः, प्लुतविवेचनम्, न्यायसूत्राणि, तेषां विस्तरेण विवेचनं च साधु निरूपितमस्ति। चतुर्थस्यास्य विभागस्य सूत्रादीनि—

| | | |
|---|---|---|
| षष्ठः | प्र० | १४३ |
| ,, | द्वि० | १४५ |
| ,, | तृ० | २१६ |
| ,, | च० | १८५ |
| सं० | प्र० | १६७ |
| ,, | द्वि० | १७२ |
| ,, | तृ० | १८२ |
| ,, | च० | १२२ |
| | | १३६५ |

## सिद्धहेमचन्द्रशब्दानुशासनम्

अस्याष्टमोऽध्यायो द्वितीयमहाविभागत्वेन प्रसिद्धोऽस्ति। अस्यापि चत्वारः पादाः सन्ति, चतुर्षु पादेषु ११११९ सूत्राणि सन्ति। अनेनाध्यायेन केवल-प्राकृतादिभाषाशब्दानुशासनं भवति। चतुर्थे पादे शौरसेनीभाषार्थं सप्तविंशतिः, मागधीभाषार्थं षोडश, पैशाचीभाषार्थं द्वाविंशतिः, चूलिकापैशाचीभाषार्थं चत्वारि, अपभ्रंशभाषार्थं विंशत्युत्तरशतम्, प्राकृतभाषार्थं ९३० सूत्राणि सन्ति। संस्कृतभाषायाः प्राकृतादिषण्णां भाषाणां च ज्ञानायेदमेकमपि शब्दानुशासनं कामं पर्याप्तमस्तीति सुधियः स्वयमेव विभावयिष्यन्ति।

## स्याद्वादसिद्धान्तो हैमशब्दानुशासनञ्च

अस्य व्याकरणस्य कस्यापि विभागस्य प्रकरणस्य प्रयोगस्य च विचारावसरे "सिद्धिः स्याद्वादात्" (है० १।१।२।) इत्यधिकारसूत्रन्तूपस्थितमेव दृश्यते, यतो हि सकलेऽपि शब्दानुशासने सूत्रमिदं स्वाधिकारं व्यापकतया प्रत्याययति।

इदमत्राकूतम्—"गम्ययपः कर्माधारे" (२।२।७४) इत्यनेन स्याद्वादपदात् पञ्चमी, तेन स्याद्वादमाश्रित्येत्यर्थः, शब्दानुशासनस्य प्रक्रान्तत्वेन शब्दानामित्यध्याहारो बोध्यः, सिद्धिः शब्दानित्यत्ववादिमते निष्पत्तिः, शब्दनित्यत्ववादिमते ज्ञप्तिः, स्याद्वादमते चोभयथाप्यदोषः। एवञ्च स्याद्वादमाश्रित्य शब्दानां निष्पत्तिर्ज्ञप्तिर्वा बोध्येति सूत्रार्थः। स्याद्वादपदार्थश्च स्याद्रूपो वादः स्याद्वाद इति समासे वाद-शब्दोऽनेकान्तबोधकः, स्याच्छब्दस्तु अनेकान्तद्योतकः। स्यादित्येतस्य वाद इति समासे च स्यादित्यव्ययं वाचकत्वेनानेकान्तद्योतकमिति द्विधा स्याद्वादपदार्थो निरूपितस्तेषु तेषु निबन्धेषु।

स्यादित्यव्ययस्य वाचकत्वे तु तेनैव सकलार्थबोधे स्यादस्त्येवेत्यादिप्रयोगेषु अस्त्येवादिप्रयोगस्यानर्थक्यं पौनरुक्त्यं वा भवेदित्यनेकान्तद्योतकत्वमेवाङ्गीकार्यम्। ननु यदि निपातानां द्योतकत्वपक्षाभिप्रायेण गुणभावेनानेकान्तस्य द्योतकत्वं स्यादित्य-व्ययस्योररीक्रियते, तदाऽनेकान्तवाचकपदस्य गुणभावेनैव वाचकत्वं स्वीकार्यम्, 'येनैव रूपेण वाचकं पदमभिधत्ते, तेनैव रूपेण निपातो द्योतयति' इति सिद्धान्तात्। यदि च स्यादित्यव्ययं केनाप्युक्तमनेकान्तं द्योतयतीत्युच्यते, तर्हि तच्छब्दप्रयोगबलेन तदर्थ-विज्ञानात्तस्य तद्वाचकत्वमेवापद्येतेति गुणभावेन तस्यानेकान्तद्योतकत्वासंभवः।

एवमेव प्रधानभावेन स्यादित्यव्ययमनेकान्तद्योतकमित्यसमञ्जसम्, प्रधानभावेनास्तीत्यादिशब्दैरस्तित्वाद्यर्थावगतौ स्यादित्यनेन प्रधानभावेन तदर्थद्योतननिष्फलत्वात्। यदि च तन्नास्तित्वाद्यर्थद्योतकं स्यादित्युच्येत, तर्हि न कुत्राप्यनभिहितद्योतनदर्शनं भवति। अपि च अस्तिपदं प्रधानतया अस्तित्वमभिधत्ते, स्यादिति च गुणरूपेण नास्तित्वाद्यभिधत्ते। इत्थञ्च समुपपन्नं स्याच्छब्दस्य प्रधानगुणभावेनानेकान्तद्योतकत्वमित्यपि अपसिद्धान्तः, यथा स्यादित्यनेनानभिहितनास्तित्वाद्यर्थावगतिस्तथा तेन सर्वार्थाभिधानं कर्तुं शक्यम्। न चान्ययोगव्यवच्छेदार्थकैवशब्दात् सर्वार्थव्यावर्तनेन न तेषां द्योतकत्वं स्यादित्यस्य, तुल्ययुक्त्या यथा एवकारेण सर्वार्थव्यावर्तनं तथा कथन्न सर्वार्थान्तर्वर्तिनास्तित्वादिव्यावर्त्तनमिति समायातं स्याच्छब्दस्यानेकान्ताद्योतकत्वमिति चेत्! न; यथा अस्तीत्यादिपदानि प्रधानगुणभावेनास्तित्वाद्यर्थानभिदधते, तथा स्याच्छब्दोऽपि प्रधानगुणभावेन तदर्थान् द्योतयतीति सिद्धान्तात्।

अयमभिप्रायः—द्रव्यरूपेण अस्तित्वं पर्यायरूपेण च नास्तित्वमिति द्रव्यार्थिकनयापेक्षया अस्तित्वस्य मुख्यत्वम्, तस्य च तद्विनाऽनवस्थितस्य नास्तित्वादिसापेक्षस्यैव सम्भवः, इत्थं नास्तित्वस्य गौणत्वम्। एवमेव पर्यायार्थिकनयापेक्षया नास्तित्वस्य मुख्यत्वं तस्य च तद्विनाऽनवस्थितस्यास्तित्वसापेक्षस्यैव सम्भव इति। अस्मिन्नयेऽस्तित्वस्य गौणत्वमिति द्रव्यार्थिकपर्यायार्थिकनयापेक्षप्रधानगुणभावेन स्याच्छब्दस्यानेकान्तद्योतकत्वं तदितरस्य च वाचकत्वं सिद्धम्। जीवाऽजीवाश्रव-बन्ध-संवरनिर्जरा-मोक्षाख्यतत्त्वेषु भावाभाव-नित्यत्वानित्यत्वभेदाभेदाद्यनन्तधर्मसहितैकरूपत्वमनेकान्तत्वम्, एकस्यैकानेकस्वरूपत्वमनेकान्तत्वमिति यावत्। निखिलमपि वस्तु द्रव्यरूपेण नित्यम्, पर्यायरूपेणानित्यं तथा तदेव स्वरूपेण सत्, अन्यरूपेणासत्, एवं सकलाश्वव्यक्त्यनुगतत्वात् सामान्यं सत्तापेक्षया च विशेषः। शर्करादीनां माधुर्यं शब्दवाच्यत्वेनाभिलाप्यं तन्न्यूनाधिक्यस्य च शब्दावाच्यत्वेनानभिलाप्यम्। एवञ्चैकस्यैव वर्णस्य ह्रस्वत्वादिकं स्याद्वादमन्तरेण नोपपद्येत,एवमेकस्यैवानेककारकसन्निपातः, सामानाधिकरण्यम्,विशेष्यविशेषणभावादयः, स्थान्यादेशप्रकृतिविकृतिनिमित्तनिमित्तिभावादयो नोपपद्येरन् स्याद्वादमन्तरेण, यतो हि वर्णानां नित्यत्वपक्षे यस्य वर्णस्य ह्रस्वत्वं विधीयते तस्यैव दीर्घत्वं तत्पक्षे न सिद्ध्येत, ह्रस्वत्वादेः पूर्वधर्मनिवृत्तिपूर्वकधर्मकत्वात्। वर्णानामनित्यत्वपक्षे

वर्णानां विनाशादेकस्यैव ह्रस्वत्वादिविधिरित्यनुपपन्नम्। स्याद्वादसिद्धान्तस्वीकारे वर्णरूपतया शब्दानां नित्यत्वं ह्रस्वादिरूपतया त्वनित्यत्वमिति ह्रस्वदीर्घादिविधानोपपत्तिः सिद्ध्यति। एवं 'पीयमानं मधु मदयति' इत्यादौ मधुनि पीयमानापेक्षया कर्मकारकत्वम्, मदयतीत्यपेक्षया कर्तृत्वमित्येकस्यैवानेककारकसंनिपातः स्याद्वादनये सिद्ध्यति। तदस्वीकारे तु नित्यत्वे एकरूपवृत्तित्वाद्रूपान्तरानुपपत्तेर्न घटेत कारकसन्निपातः। तथैवैकान्तवादिनये भिन्नप्रवृत्तिनिमित्तयोरेकत्रार्थे वृत्तिरूपसामानाधिकरण्यं घटपटयोरिव सर्वथैव भेदे भवितुं नार्हति। सर्वथाऽभेदेऽपि सामानाधिकरण्यं न घटते, सामानाधिकरण्यस्य भेदनिबन्धनत्वात्। यथा नीलमुत्पलमित्यत्र भेदरूपैकान्तपक्षेऽभेदरूपैकान्तपक्षे वा सामानाधिकरण्यं न सम्भवतीति कथञ्चिद् भेदः कथञ्चिदभेद इत्येवंरूपः स्याद्वादः स्वीकर्त्तव्य एव। एकान्तवादिनये विशेष्यविशेषणभावोऽपि न घटते। तथाहि—विशेष्यविशेषणयोर्नितान्तं भेदाङ्गीकारे घटपटयोरिव विशेष्यविशेषणभावो न स्यात्, एवं तयोर्नितान्तमभेदाङ्गीकारे घटो घट इत्यादिवद्विशेष्यविशेषणभावो न स्यात्, तस्य भेदाभेदनिमित्तकत्वादिति कथञ्चिद्विशेष्यत्वं कथञ्चिद्विशेषणत्वमित्येवंरूपः स्याद्वादः समाश्रयणीयः।

एवञ्च शब्दानुशासनस्य सर्वसाधारण्यं स्याद्वादनये एव सिद्ध्येत, न शब्दनित्यत्वे, नापि शब्दानित्यत्वे, तयोरेकान्तत्वेन सकलग्राह्यत्वाभावात्। तथा चोक्तं स्वयं ग्रन्थकृता—"स्यादित्यव्ययमनेकान्तद्योतकम्, ततः स्याद्वादोऽनेकान्तवादः, नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम इति यावत्। ततः सिद्धिर्निष्पत्तिर्ज्ञप्तिर्वा प्रकृतानां शब्दानां वेदितव्या। एकस्यैव हि ह्रस्वदीर्घादिविधयोऽनेककारकसन्निपातः सामानाधिकरण्यं विशेषणविशेष्यभावादयश्च स्याद्वादमन्तरेण नोपपद्यन्ते। सर्वपार्षदत्वाच्च शब्दानुशासनस्य सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयणमतिरमणीयम्। यदवोचाम स्तुतिषु—

अन्योन्यपक्षप्रतिपक्षभावाद् यथा परे मत्सरिणः प्रवादाः।
नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा ते॥[1]

---

१. अन्ययोगव्यवच्छेदे, श्लो० ३०। अयं भावः—साध्यधर्मविशिष्टधर्मिणः पक्षाः 'शब्दो नित्य एव' इत्यादयः, साध्यविरुद्धधर्मिणः प्रतिकूलाः पक्षाः प्रतिपक्षाः 'शब्दोऽनित्य एव' इत्यादयः। अन्योन्यं परस्परं पक्षप्रतिपक्षाः, तेषां भावः परस्परविरुद्धधर्मोपन्यासः,

स्तुतिकारोऽप्याह—

नयास्तव स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः।
भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः[1] ॥

अनभिप्रेतस्याद्वादानां त्विदमाकूतं यदेकस्मिन् धर्मिणि परमार्थसति परमार्थसतां युगपत्सत्त्वादीनां धर्माणां परस्परपरिहारस्वरूपाणां समावेशो न संभवति। अयमाशयः—सत्यं यदस्ति वस्तुतस्तत् सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव, न नास्ति, यथा प्रत्यगात्मा। यच्च क्वचित् कथञ्चित् कदाचित् केनचिदात्मनाऽस्तीत्युच्यते, यथा प्रपञ्चः, तद्व्यवहारतो न तु परमार्थतः, तस्य विचारासहत्वात्। नहि प्रत्ययमात्रं वास्तवत्वं व्यवस्थापयति, शुक्तिमरुमरीचिकादिषु रजततोयादेरपि वास्तवत्वप्रसङ्गात्, लौकिकानामबाधेन तु तद्व्यवस्थायां देहात्माभिमानस्याप्यबाधेन तात्त्विकत्वे सति लोकायतमतापातेन नास्तिकत्वप्रसङ्गात्। पण्डितरूपाणां तु देहात्माभिमानस्य विचारतो बाधनं प्रपञ्चस्याप्यनैकान्तस्य तुल्यमिति।

---

तस्माद्धेतोः,यथा येन प्रकारेण,परे जिनशासनबहिर्भूताः, प्रवादाः प्रकर्षेण स्वाभ्युपगतार्थप्रतिपादनशीलाः सिद्धान्ताः, मत्सरिणोऽतिशयेनाक्षमावन्तः, तथा तेन प्रकारेण ते तव हे भगवन्, भवतोऽशेषान् नयान् नैगम-संग्रह-व्यवहार-ऋजुसूत्र-शब्दसमभिरूढरूपान्, अविशेषं समम्, इच्छन् मन्यमानः, पक्षपाती पक्षं पातयतीत्येवंशीलः, अर्थाद्रागेण स्वीकृतस्य पक्षविशेषस्य विनाशेन शोभमानः, समयः स्यात्पदलाञ्छनः स्याद्वादसिद्धान्त इत्यर्थः, न मत्सरी मत्सराभाववानिति।

१. स्वयम्भूस्तोत्रे, श्लोकः ६५। अस्यार्थः—हे भगवन्! तव स्यात्पदलाञ्छनाः स्याद्रूपं लाञ्छनं येषां ते स्यात्पदलाञ्छनाः स्यात्पदचिह्नाः, इमे प्रसिद्धाः, नयाः निरवधारणा अभिप्रायविशेषाः पूर्वोक्ताः सप्त, रसोपविद्धा रसेन पारदेनोपविद्धा मिश्रिता लोहधातव इवाभिप्रेतफला अभिप्रेतं फलं येभ्यस्ते। यथा पारदसंमिश्रो लोहादिधातुरभीप्सितफलप्रदो भवति, तथा सप्त नया अपि वाञ्छितफलप्रदा इति यतो यस्मात् कारणाद् भवन्ति ततः तस्माद्धेतोः, हितैषिणः आत्महितेच्छवः, आर्या मोक्षपथसमीपयाता जना भवन्तं केवलज्ञानभास्वद्विभूषितदेहं प्रणताः प्रणन्तुमारब्धाः।

अपि च सदसत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः । न च वस्तुनि विकल्पः सम्भवति । तस्मात् स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्धारणस्य फलस्य निर्धारयितुश्च प्रमातुस्तत्करणस्य प्रमाणस्य च तत्प्रयेमस्य च सप्तत्वपञ्चत्वस्य च सदसत्त्वसंशये किं कृतं स्यात्तीर्थंकरेणेत्यलमप्रस्तुतप्रसङ्गेन ।

जैनसम्प्रदाये श्रीहेमचन्द्राचार्यात् प्रागपि श्रीगौतमस्वामिश्रीसुधर्मस्वामिप्रभृतयो गणधराः, श्रीभद्रवाहुप्रभृतयः श्रुतकेवलिनः, श्रीसिद्धसेनदिवाकरः, चतुश्चत्वारिंशदधिक-चतुर्दशशतग्रन्थप्रणेता हरिभद्रसूरिः, जैनसिद्धान्तस्य सारभूतसूत्रसंग्रहकारस्तत्त्वार्था-धिगमसूत्रप्रणेता च उमास्वातिः, जैनागमादीनां पुस्तकस्वरूपकर्त्तारो देवर्धिगणिक्षमा-श्रमणादयोऽनेके पूर्वधराः, प्रौढगीतार्था महाप्रभावकाः समभूवन्, तथापि जैनेतर-दर्शनेषु विदुषोऽस्य साहित्यस्यास्य च यादृशं विशिष्टं स्थानमस्ति न तादृशमन्येषाम् । जैनेतरदर्शनाचार्याणां केनापि हेतुना जैनदर्शनेन साकं कस्यचन सम्बन्धस्यावसरे प्राप्ते सर्वतः प्रथमं तेषां दृष्टिरस्य महामहिमशालिनः साहित्ये पतति । द्वादशशतका-दारभ्य अद्य यावत् समुद्भूतानां सर्वश्रेष्ठानां साहित्यकाराणां गणनाप्रसङ्गेऽस्य महा-विदुषो नाम प्रथमं गणितं भविष्यतीति नास्ति मतद्वयस्यावकाशः ।

एतादृशमहापुरुषविरचितं सर्वाङ्गसुन्दरं व्याकरणमिदं केषां धन्यानां मुदे न कल्पेत । विद्वानयं च केषां श्रद्धास्पदं नास्ति । अत एव सोमेश्वरेण कविनोक्तम्—"वैदुष्यं विगताश्रयं श्रितवति श्रीहेमचन्द्रे दिवम्" इति । अपेक्षितयावत्सामग्रीसंभृतो-ऽस्य शब्दानुशासनस्य मत्सररहिता विपश्चिदपश्चिमा अवगाहनं करिष्यन्तीति शम् ।।

—

लघुग्रन्थरत्नप्रभावलिः—१३

# गलितप्रदीपः

लक्ष्मीधरसूरिविरचितः

सम्पादकः
श्रीकृष्णवामनदेवशास्त्री वेदाचार्यः
वाराणसेयसंस्कृतविश्वविद्यालये
ऋग्वेदाध्यापकः

सारस्वती सुषमा
फाल्गुनपूर्णिमा, संवत् २०१६

## विषय-सूची



---

# प्रस्तावना

श्रीमद्भगवतो वेदपुरुषस्यानिर्वाच्योऽलौकिकश्च महिमा। अस्य मायारूप-चराचरजातस्य सृष्टिकालादद्यावधि यावत्तस्य रूपं द्रष्टुं कश्चिदपि समर्थो नाऽभूत्। अत एव ऋग्वेदे नासदीये सूक्ते उक्तम्—"सो अङ्ग वेद यदि वा न वेद"। स वेद-पुरुषो विराड् मन्त्रस्वरूप इति वेदविद्भिः कथ्यते, "मन्त्रमयीत्वं देवतात्वम्" इति मीमांसावचनात्। तत्र ऋषिच्छन्दसी अपरिवर्तनीये, विनियोगबलाद्देवता-भिन्नत्वमिति लोकेऽपि दर्शनात्। यथा यजुर्वेदे—"शन्नो देवीरभिष्टये" इति मन्त्रस्या-रूपलिङ्गसत्त्वेऽपि शनैश्चरावाहनेऽस्य विनियोगो दृश्यते। अनेन शब्दब्रह्मणो-रभेदत्वं सिध्यति। उक्तञ्च—"एकं सद्विप्रा बहुधा वदन्ति०"। ब्रह्मणो यस्यांशस्य येन मन्त्रेण आवाहनादिविनियोगः क्रियते, सोंऽशस्तत्र प्रादुर्भूय विनियोगसिद्धिं करोति। स मन्त्ररूपः परमात्मा सनातनः शब्दरूपो वाग्रूपो नित्यश्चेति, "वाचा विरूप-नित्यया" इति श्रुतेः। स्मृतिपुराणादिप्रभूतग्रन्थसाहित्यसम्भारेषु सत्स्वपि वेद-स्यालौकिकतात्पर्यप्रतिपादनरूपं वैशिष्ट्यं वर्तत एव। उक्तञ्च—"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥" इति।

स वेदो मन्त्रब्राह्मणरूपः। "मन्त्रब्राह्मणयोर्वेदनामधेयत्वम्" इति वचनात्। तत्र प्रयोगकाले कर्मानुष्ठानस्मारका मन्त्राः, विधायकं वाक्यं ब्राह्मणम्। तस्यैव ब्राह्मणस्य महाव्रताद्युत्तरक्रतुविधायको भागो ब्रह्मजिज्ञासाविषयको ज्ञानकाण्डभागश्च आरण्यकोपनिषन्नाम्ना प्रसिद्धः। एतेषामेव संहिता-ब्राह्मण-आरण्यकोपनिषदां सम्भूय लोके 'शाखा' इति नाम्ना प्रसिद्धिः। अस्य वेदशरीरस्य षडङ्गानि प्रमुखानि, अन्यान्युपाङ्गानि च भवन्ति। अस्य अङ्गोपाङ्गानामपि प्रामाण्यं श्रुतिमूलकमेव। यथा शिक्षामूलमुपनिषदि—"शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम संतानः। इत्युक्तः शीक्षाध्यायः" इति। तथैवावशिष्टानां वेदाङ्गानां बहुशो विस्तारो येन येन कृतः, तस्यैव नाम्ना ते ग्रन्था लोके प्रसिद्धाः। यथा—(१) आश्वलायनश्रौत-गृह्य-कल्पसूत्रम्। (२) यास्कनिरुक्तम्, निघण्टुश्च। (३) पाणिनीया अष्टाध्यायी, शिक्षा च। (४) लगधज्यौतिषम्। (५) पिङ्गलछन्दः। कल्पसूत्रस्यैव द्वौ भागौ श्रौतगृह्यनामभ्यां प्रसिद्धौ सूत्रशब्देन कल्पशब्देन वा व्यवह्रियेते। तथैव

निघण्टुगतकठिनशब्दानामेव निर्वचनं निरुक्तेऽस्ति। अतो निरुक्तशब्देनैव निघण्टोर्व्यवहारः षडङ्गेषु प्रसिद्धः। यथा—शिक्षा कल्पो व्याकरणं नैरुक्तं छन्दो ज्योतिषमिति षडङ्गानि। अन्येऽप्येतत्सम्बद्धा उपलब्धग्रन्थाः सन्ति। यथा—(१) गौतमधर्मसूत्रम्। (२) बौधायनशुल्वसूत्रम्। (३) शौनकीयमृक्प्रातिशाख्यम्। (४) शौनकीया सोमोत्पत्तिः। (५) निविदः, कुन्तापः, प्रैषाध्यायश्च। (६) शौनकचरणव्यूहः। (७) व्याडिशिक्षा। (८) लक्ष्मीधरसूरिकृतगलितप्रदीपः। (९) पदगाढः। (१०) कात्यायनकृतयूपलक्षणादिकर्मलक्षणान्तानि अष्टादश परिशिष्टानि। (११) बृहद्देवता, सर्वानुक्रमणी, परिभाषा च शौनकीया। (१२) शौनकोक्तमृग्विधानम्। (१३) वर्णक्रमलक्षणव्याख्या—इत्यादयः। अन्येऽप्यदृष्टपूर्वा ग्रन्था उपलब्धा भवेयुः, तेषामनुपलब्धेर्नामनिर्देशोऽत्र न कृतः। एष्वङ्गोपाङ्गेषु प्रतिपादिता विषया विस्तरभियाऽत्र न लिख्यन्ते। एते सर्वेऽपि ग्रन्थाः शिक्षावत् श्रुतिमूलकत्वात् प्रामाण्यभूता एव।

## ऋग्वेदे गलितपदानि

पदपाठे पुनरुक्तपदसमूहलोपविषयक एव विचारोऽत्रावश्यकः। अस्यैव लुप्तपदत्रयादिसमूहस्य गलितसंज्ञा लोके प्रसिद्धा। परञ्चेयं गलितपदव्यवस्था सर्वेषु वेदेषु भिन्ना। अत्र नियमैकत्वं नास्ति। इदानीमृग्वेदे कीदृशो गलितपाठस्तत्साकल्येनोच्यते। पुनरुक्तः सम्पूर्णो मन्त्रः सर्वत्र गलितो भवति। अस्यापवादौ—"नू मे ब्रह्माणि०", "यज्ञेन यज्ञ०" इमौ मन्त्रौ। मन्त्रार्द्धः पादश्च एकस्मिन्नेव वर्गे त्रिरावृत्तः, तथा चान्तिमः पादः कुत्रापि चतुरावृत्तो गलितो भवति। जगतीत्रिष्टुप्छन्दस्कश्च मन्त्रार्द्धः पुनर्गत एव गलितः। एकस्मिन्नेव वर्गे आनुपूर्विकं पदत्रयमपि चतुर्वारं पठितञ्चेद् गलितं भवति। सर्वत्र पदत्रयान्न्यूनं गलितं नास्ति। परं तस्यापवादाः सप्तसंख्याकाः सन्ति—(१) यत्। इन्द्राग्नी इति। (१-७-२७-१०)। (२) उच। स्यः। (१-७-२७-१०)। (३) पृथिव्याम्। मध्यमस्याम्। (१-७-२७-१०)। इमानि पदद्वयोदाहरणानि प्रथमायामेव ऋचि भिन्नभिन्नस्थलेषु समागत्याग्रिमायामेव ऋचि एकत्र सम्मेलनेन गलितानि। (४) नूतनासः। सत्। (४-६-२७-२) अत्र "सदस्य मदे" इति मन्त्रे प्रथममन्त्रगतमुपर्युक्तं पदद्वयं भिन्नस्थले पठितमप्यन्यैर्गलितपदैः सहात्र पुनः पाठेन गलितम्। (५) सुऽजाते। अश्वऽसूनृते। (४-४-२१-२)

अस्यापि पूर्ववद् व्यवस्था । (६) अग्निम् । समुद्रऽवाससम् । (६–७–६–५) पुनरुक्तत्वादेवेदं गलितम् । (७) इन्द्राग्नी इति । सोमऽपीतये । (६–३–२१–२) इदमपि तथैव । इमे सप्तापवादाः पदद्वयात्मकाः । तथैव एकपदात्मकापवादस्थलान्यपि सप्त संख्याकानि । (१) परमस्याम् । (२) अवमस्याम् । (१–७–२७–१०) प्रथमायामृचि भिन्नस्थले पठितेऽप्यत्रान्यैः सहैकस्यामृचि पठितत्वाद् गलितम् । (३–७) "मदे" एकवारम्, "सत्" चतुर्वारम् (४–६–२७–२) इदमपि तथा । अन्ये केचन विशिष्टापवादाः । येषां पदक्रमजटादिपाठकालेऽपि संहितापाठ एव विहितः, अपदत्वादिमान्यपि गलितानीति प्रकारान्तरेणास्यान्यस्मिन् परिशिष्टे उक्तम् । (१) "त्र्यम्बकं यजामहे०" मन्त्रः (५–४–३०–६) । (२) भद्रन्नो अपि वातय मनः (७–७–२–१) एकपदा ऋक् । (३) "प्रजापते न त्वदेतान्यन्यो०" (८–७–४–५) । (४) "ऋतञ्च सत्यञ्च०" (८–८–४८) १–२–३ मन्त्राः । अतः परमवशिष्टानि गलितान्येवास्मिन् ग्रन्थे ग्रन्थकारेण ग्रथितानि । तत्र प्रतिस्थलं येऽङ्का अङ्कितास्ते सर्वत्र प्रचलितमण्डलानुवाकसूक्तमन्त्रपद्धत्या न, अपि तु अष्टक-अध्याय-वर्ग-मन्त्रक्रमेण सन्ति । ग्रन्थस्यास्य द्वौ भागौ—परिभाषाप्रकरणानुसारी प्रथमो भागः, परिगणितगलितानां द्वितीयो भागश्च । इत्थं सामान्यविशेषापवादोदाहरणादिसहितमृग्वेदगलितस्वरूपमत्र प्रदर्शितम् । यया कयापि पद्धत्या प्रयोगकाले च संहितायामक्षरमपि गलितं नास्तीति विशेषः ।

## कृष्णयजुर्वेदे

इत्थमृग्वेदे पदपाठे गलितनियमान् प्रदर्श्य इदानीं कृष्णयजुर्वेदस्योपलब्धायां तैत्तिरीयशाखायां गलितं विचार्यते । अस्याः संहितायाः पदपाठे तु गलितपाठो नास्ति । संहितायामनेकवारमपि पठितस्य त्रिपदादिपदसमूहस्य पुनः पुनस्तत्तत्स्थले पुनः पदपाठो भवति । उदाहरणं यथा—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्", "कस्मै देवाय हविषा विधेम", "यज्ञेन यज्ञमयजन्त०" इत्यादि । परञ्च मन्त्र-ब्राह्मण-विधि-मिश्रितायामस्यां संहितायां बहवो मन्त्रप्रतीकपाठाः सन्ति । यथा—"आप्यायस्व", "सन्ते", "त्वन्नो अग्ने", "सत्वन्नो अग्ने", उदुत्यम्", "चित्रम्" इत्यादयः । इमे प्रतीकमन्त्रा एव वाक्यान्तरेण गलितसंज्ञका इति वक्तुं शक्यते, प्रयोगकाले तु प्रतीकरूपा इमे मन्त्राः कृत्स्नाः पठ्यन्त इति दर्शनात् । तथैव संहितायां यावन्तो मन्त्रभागाः सन्ति तेषामेव

प्रतीकभागानां पदक्रमजटाघनादिप्रकृतिविकृतिपाठा भवन्ति, न तु प्रतीकरूपाणामृचाम्। केषुचिदनुवाकेष्वपरमन्त्रार्द्धे आदावन्ते च पठ्यते। अवशिष्टासु गलितोऽस्ति। पदादिपाठेऽपि तावद्भागस्यैवोच्चारणं भवति। यथा—"तेषां सहस्रयोजने०"। क्रमपाठे त्रिक्रमादयो न भवन्ति। यथा—उदु। उत्यम्। इत्यनुक्रमः। अन्यासु शाखासु—उदुत्यम्। ॐ इत्यूँ। इति त्रिक्रमः पठ्यते, पदपाठे गलितस्यैवाभावादित्यलमतिविस्तरेण।

## शुक्लयजुर्वेदे

वाजसनेयमाध्यन्दिनसंहितायां तु कृष्णयजुर्वेदवद् मन्त्रप्रतीकपाठो वर्तते, अनुषङ्गपाठो नास्ति, अपि तु "सहस्राणि सहस्रशो०" इत्यनुवाके प्रतिमन्त्रं "तेषाम्" इत्यस्य ऋग्वेदवत्पुनरुक्तिः। "नमो रुद्रेभ्यो ये" इति त्रयो मन्त्रा अपि पृथगुक्ताः। परञ्च पदपाठे पदत्रयादिसमूहा गलिता भवन्ति। अन्ये नियमाः समानाः। अत्र लुप्तस्वाध्यायपाठोऽस्तीति विशेषः। यथा—"एकस्मै स्वाहा। द्वाभ्यां स्वाहा।" अतः परं "शताय स्वाहा"। प्रयोगकाले त्रिभ्य इत्याद्यङ्कानां स्वाहायुक्तानामुच्चारणं भवति। अयमपि गलितस्यैव प्रकारः। तथा चैकस्मिन्ननुवाके पदमेकं पदद्वयं वा पुनः पुनरावृत्तं चेद् गलितं भवति। यथा—नमो हिरण्यबाहवे० इत्यनुवाके पुनरुक्तत्वान्नम इति पदम्, अग्रे—पतये नम इति पदद्वयञ्च गलितम्। पदत्रयं यथा—"त्र्यम्बकं यजामहे०" परञ्च क्रमपाठे वैपरीत्यं वर्तते। ऋग्वेदे क्रमजटादिपाठे गलितपदानां संहितापाठपूर्वकं क्रमादिपाठो विवक्षितः। माध्यन्दिने तु पुनरुक्तानां लोपपूर्वकं क्रमादिपाठः। ऋग्वेदे मन्त्रार्द्धेऽन्तिमं पदमवशिष्टं चेदुपान्त्यपदेन सह तस्य क्रमजटापाठौ भवतः, अन्या विकृतयो न भवन्ति। अत्र त्वन्तिमपदस्याग्रिमपदेन सह क्रमादिपाठो भवति। उक्तञ्च शुक्लयजुःप्रातिशाख्ये—"त्रिपदाद्यावर्तमाने संक्रमः" इति। तत्रोदाहरणम्—(त्र्यम्बकं यजामहे सुगन्धिम्) "पतिवेदनम्" (उर्वारुकमिव बन्धनात्) "इतः। मुक्षीय।" अत्र 'पतिवेदनमितः' अयं संक्रमः। त्र्यम्बकमिति पदत्रयम्, उर्वारुकमिति पदद्वयञ्च गलितमस्ति। इति माध्यन्दिनसंहितायां गलितविचारः।

## शुक्लयजुर्वेदकाण्वसंहितायाम्

शुक्लयजुर्वेदस्य काण्वसंहितायां प्रतीकपाठो वर्तते। यथा—"हिरण्यगर्भ इत्येषः" इत्यादि। अनुसङ्गपाठो नास्ति। पुनरुक्तपाठः क्वचिन्नास्ति क्वचि-

दस्ति। यथा--"देवानां हृदयेभ्यः" इति गलितम्। तेषां सहस्रयोजने० इति पठ्यते। पदपाठे पुनः पुनरुक्तं पदमेकं यथा - "नमः", "स्वाहा"। पदद्वयम्—"च। मे।" "यज्ञेन। कल्पताम्।" पदत्रयम्--"या। ते। अग्ने।" पदचतुष्टयादिगलितानि बहूनि। तथैव मन्त्रः, अर्द्धः, पादश्च पुनरुक्तत्वाद् गलितो भवति। परञ्चापवाद-रूपेण--"स्तोम पृष्ठा। घृतवती" इत्यर्द्धः, "पावकः। अस्मभ्यम्। शिवः। भव।" इति पादश्च पुनरुक्तोऽपि पदपाठे पुनः पठ्यते। प्रतीकमन्त्रस्य प्रतीकमात्रपाठस्यापि पद-क्रम-जटादिपाठ एकस्मिन्नेव स्थले वर्तते। उदाहरणम्—"लोकम्। पृण।", "ताः। अस्य।", "इन्द्रम्। विश्वाः।" इति।

क्रमपाठे कुत्रापि पुनरुक्तस्य संहितापाठो नास्ति। अपि तु पुनरुक्तस्थलेऽ-ग्रिमपदेन सह प्रथमपठितमन्त्रस्यापि सङ्क्रमो भवति। यथा—सोमस्य त्वा द्युम्नेन० अस्यान्तिमेन 'पाहि'पदेन सहाग्रिममन्त्रस्य "जानराज्याय" इत्यनेन सह सङ्क्रमः। अस्याः क्रमपाठे मन्त्रार्धस्य मन्त्रान्तस्य चान्तिमपदस्येतिकरणमनिश्चितम्। कुत्रचिद् बह्वीनामृचामन्ते एवेतिकरणं भवति, यदन्यासु शाखासु नास्ति। परञ्च सर्वत्रानुवाकान्ते इतिकरणं भवत्येव। यथा—"अग्निर्ज्योतिषं त्वा" (३.६.) इत्यष्टमन्त्राणामनुवाके आदितः पञ्च मन्त्रान् विहाय षष्ठसप्तममन्त्रान्ते चेतिकरण-मस्ति। प्रातिशाख्येऽस्यैव स्थितोपस्थितसंज्ञा। लुप्तस्वाध्यायोऽपि भवत्येव। अत्र तत्रैवोक्ताः क्रममुष्टिश्लोका एव प्रमाणम्। इति काण्वशाखायां गलितविचारः।

## सामवेदे

प्रचलितायां कौथुमीशाखायां गलितं विचार्यते। "गीतिरूपा मन्त्राः सामानि" (का० श्रौ० सू०) इति साम्नो रूपम्। परञ्च सर्वे ऋङ्मन्त्रास्तु न गीतिरूपाः। अत एव ये मन्त्रा गीयन्ते, तेषां मूलमन्त्राणाम् 'आर्चिक' इति संज्ञा प्रसिद्धा— "ऋग्रूपा आर्चिकाः" इति। आर्चिकमन्त्रा एव साम्नामाधारभूताः। गानरूपा एव प्रकृतिविकृतयस्तत्र, जटादीनामभावात्। परञ्च ऋग्यजुराथर्वणानां संहितापद-क्रमाणां प्रकृतिसंज्ञा लोके वेदे च प्रसिद्धा, अग्रे जटादीनां विकृतित्वात्। उक्तञ्च— "जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः। अष्टौ विकृतयः प्रोक्ताः" इति। ताः सर्वा अपि विकृतयः सङ्क्रममूला एव। परञ्च सामवेदे गानमन्त्रेषु तस्यानुपयोगि-त्वात् क्रमप्रकृतिरपि नास्ति। आर्चिकस्य केवलं पदपाठः कथ्यते, गीतिश्च पठ्यते।

संहितायाम् ( आर्चिके ) पुनरुक्तमन्त्रस्य प्रतीकपाठो भवति, न पुनर्मन्त्रपाठः। यथा—"उपास्मै गायता नरः" प्रयोगकाल एव तैत्तिरीयवत् स मन्त्रः पुनरावृत्तो भवति। पदपाठेऽपि ऋक्, अर्धः, पादश्च गलितो भवति। तत्रापि संहितामूलं प्रतीकं पठ्यत एव। त्रिपदादीनां पुनरावर्तनं नास्ति। इङ्ग्ये ( अवग्रहयुक्ते ) पदे विशेषः—तत्पदमेव पदपाठे पुनरावृत्तं भवति। प्रथममनवग्रहम्। "हव्यदातये" अपरं "हव्य" "दातये" भवतीति विशेषः।

## अथर्ववेदे

उपलब्धायां शौनकशाखायामपि ऋग्वेदवत् सप्तनियमानुसारं गलितं भवति। ऋग्वेदप्रकृतित्वात्तस्य। उक्तञ्च—"बह्वृचवदाथर्वणाः" इति।

परञ्चात्र सप्तनियमादतिरिक्तानां गलितानामपि सङ्कलनं क्रियेत चेदपरो गलितप्रदीपोऽपि निर्मीयेत। तत्रापि बहून्यवशिष्टानि गलितानि सन्ति, येषां परिगणनं कृतं नास्ति।

## गलितपद्धतेः प्रामाण्यचिन्ता

एवं गलितपद्धतिरपि पूर्वोक्तशिक्षाग्रन्थवद् वेदमूलकत्वात् प्रमाणभूता एव। अत्र केचिदाहुः—ऋग्वेदे पदपाठे अन्येषां संहिता—पदपाठे च समग्रा मन्त्रा एव अध्येतव्याः शास्त्रवत्तायै। अथ च—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह" इति वेदाङ्गशिक्षोपदेशानुसारं वेदमन्त्रेषु स्वरवर्णमात्रालोपादिः स्वल्पोऽप्यपराधो महतेऽनर्थाय कल्पत इति वदन्ति। तर्हि पदपादऋगर्धमन्त्रादिलोपव्यत्यासाद्यपराधः कथमक्षम्यो न भवेत्? एवं यथाशास्त्रमध्येतव्ये वेदे मन्त्राणां संहितापदक्रमरूपे त्रिविधेऽपि पाठे गलितपाठः प्रतीकपाठश्च कथं शास्त्रीयतामर्हेत्? कथञ्च पुनः फलाय कल्पेतेति। अन्ये च विकृतिपाठं लक्षीकृत्य आक्षिपन्ति यद् जटादिविकृतिषु पदानां व्युत्क्रमपाठसद्भावाद् वेदस्वरूपविप्लावनं भवति, तर्हि कथं व्युत्क्रमपाठोऽपि मन्त्र इति। तदुभयमपि चिन्त्यम्। उक्तञ्च तन्त्रोक्तप्रयोगेषु—

मन्त्रमादौ पुनः श्लोकमन्ते मन्त्रविपर्ययम्।
मारणोच्चाटने बन्धे सम्पुटोऽयमुदाहृतः॥

अत्र मन्त्रविपर्ययपाठस्य विहितत्वान्न विप्लावनम्, किन्तु मन्त्रपाठ एव। तथात्रापि विहितत्वान्मन्त्रपाठ एव साधुः सफलश्च बोध्यः। न केवलं तन्त्रे, अपि तु वैदिकमन्त्रेष्वप्यन्नप्रयोगादौ शापोद्धारादौ च व्युत्क्रमपाठो विधीयते। तथैव विकृतिष्वपि विहितो व्युत्क्रमपाठो न शङ्कनीय एव। तथैवास्ति हि मन्त्राणां विनियोगः क्वचिदक्षरशः, क्वचित्पदशः, क्वचित्क्रमशः, क्वचिच्च व्युत्क्रमशः,। यथाविधि सर्वं समञ्जसमेव। तेन पदशो विनियोगे कृते सति यस्यामृचि गलितपदानि सन्ति, तेषामुच्चारणं नैव भवति। क्रमशो विनियोगे तु गलितपदानां संहितापाठः, अन्येषां च क्रमपाठो विधीयते। जटादिविकृतीनां विनियोगेऽप्ययं क्रमः। तासां विनियोगो विष्णुलोकादिफलावाप्तये, पङ्क्तिपावनत्वादिप्रत्यक्षफलसिद्धये च भवतीति वराहपुराण-आदित्यपुराण-पराशरस्मृत्यादिषु प्रतिपादितम्। तद्यथा—

संहितापाठतः पुण्यं द्विगुणं पदपाठतः।
त्रिगुणं क्रमपाठेन जटापाठेन षड्गुणम्॥
जटादिविकृतीनां ये पारायणपरायणाः।
महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः॥ इति,
संहिता नयते सूर्यं पदञ्च शशिनः पदम्।
क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम्॥ इति च।

(याज्ञ० शिक्षा)

केचित्तु—

भगवान् संहितां प्राह पदपाठं तु रावणः।
बाभ्रव्यर्षिः क्रमं प्राह जटां व्याडिरवोचत्॥

इति वचनमनुसृत्य रघुवंशादिवदेतेषामपि प्रकृतिभूतवेदविभागानां रावणादिषु ग्रन्थकर्तृत्वमारोपयन्ति, तन्न युक्तम्, "क्रमपूर्वैर्महर्षिभिः" इति तत्रैवोक्तत्वात्। अथ च "शाकल-तैत्तिरीय-याज्ञवल्क्य-काण्व-कौथुम-शौनकादिषु यथा संहिताकर्तृत्वं नास्ति, अध्येतृत्वमेव विद्यते, तथैव रावणादीनामपि व्यवस्था। इत्थमुपलब्धेषु ऋगादिशाखासंहितानां पदपाठेष्वपि गलितपदानां प्रतीकमन्त्राणाञ्च नियमैकत्वाभावे हीनपाठमिथ्याप्रयुक्तत्वाद्यारोपाणां निरसनपूर्वकं सिद्धान्तः कथ्यते। अस्मिन् पक्षे यानि प्रमाणानि विचार्यन्ते उदाह्रियन्ते च, तानि श्रुतिस्मृत्यादिवाक्यानि भवन्त्येव। परञ्च तस्मिन् विषये किं प्रमाणम्? "अग्निमीले" इति मन्त्रः श्रुतिरिति कथं निर्णीयेत?

तत्रोच्यते--आब्रह्मस्तम्बपर्यन्तानां मन्त्रद्रष्टृभिर्ऋषिभिर्युक्तानां वैदिकानामखण्डजाग्रदध्ययनाध्यापनपरम्परयाऽध्ययनशिष्टाचार एव तत्र प्रमाणम्। उक्तञ्च--"ब्रह्मा त्वो वदति जातविद्याम्"। अत्र यास्कः—जाते जाते विद्यां वदति, जाते जाते विद्यत इति वा, ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति। अस्येदमेव तात्पर्यम्—सृष्टिकर्ता ब्रह्मा एव वेदस्य तत्त्वं शुद्धाशुद्धविवेकपूर्वकं गलित-प्रतीक-अनुषङ्ग-सारस्वत-मन्त्रपाठादिभेदपुरःसरं प्रकृति-विकृति-योगविकृति-स्वर-वर्णज्ञान-शाखाभेदादिसाङ्गोपाङ्गज्ञानविज्ञानकर्मोपासनाज्ञानकाण्डैः स्वर्गापवर्गसाधनादिकं सर्वमानुपूर्विकायां परम्परायां सर्वप्राथम्येन जानाति। "अनन्ता वै वेदाः" इत्यनन्तराशेर्वेदस्य यो यो भागो येन येन ऋषिणा यथाविधि यथापूर्वञ्च दृष्टस्तस्य तस्य स द्रष्टा समभूत्। सा एवाखण्डा परम्परा सृष्ट्यारम्भकालादद्य यावत्प्रचलिता वर्तत एव। तस्या आधारेणैव प्रचलितशाखाभेदैरिमां गलितप्रदीपग्रन्थस्य भूमिकां ("यथाकार्यं जायते तथाऽग्रिमं ज्ञानमपि जायते" इति यास्कवचनवत्) विदुषां पुरस्तात् समुपस्थापयामि। टीकालेखनस्य भूमिकालेखनस्य चायं प्रथमः प्रयास इति ज्ञात्वा न्यूनाधिकविषये क्षन्तव्योऽयं जन इति करसम्पुटेन विज्ञापयति—

विदुषां वशंवदः<br>**श्रीकृष्णदेवः**<br>ऋग्वेदकृष्णयजुर्वेदाचार्यः,<br>वाराणसेयसंस्कृतविश्वविद्यालयाध्यापकः।

नागपञ्चमी
वि० सं० २०१८

---

# गलितप्रदीपः

## लक्ष्मीधरसूरिविरचितः

( सव्याख्यः )

## तस्य परिभाषाप्रकरणात्मकः प्रथमो भागः

प्रणम्य सच्चिदानन्दं सान्द्रमाद्यन्तवर्जितम् ।
देवमृग्वेदगलितपदवृन्दं प्रवक्ष्यते ॥ १ ॥

आदौ प्रणम्य विघ्नेशं वरदां शारदां तथा ।
सद्‌गुरुञ्च नमस्कृत्य महालक्ष्मीं स्वदेवताम् ॥ १ ॥
ऋग्वेदपदपाठे यत् पुनरुक्तं पदत्रयम् ।
अधिकं वापि गलितमुच्यते पूर्वसूरिभिः ॥ २ ॥
परञ्च नियमा नोक्ता प्रातिशाख्यादिकर्तृभिः ।
अतस्तस्य प्रकाशार्थं सूरिलक्ष्मीधरेण वै ॥ ३ ॥
गलितप्रदीपनामा ग्रन्थदीपः प्रकाशितः ।
केवलं मूलमात्रेण तज्ज्ञानं नैव जायते ॥ ४ ॥
अतोऽनुसन्धानाध्यक्षैः क्षेत्रेशचन्द्रशर्मभिः ।
उपाह्वचट्टोपाध्यायैरादिष्टो वामनात्मजः ॥ ५ ॥
ग्रन्थस्यास्य प्रकाशार्थं काशीस्थो वेदसेवकः ।
शिरस्याज्ञां धारयित्वा 'श्रीकृष्णदेव' विश्रुतः ॥ ६ ॥
पदप्रकाशवृत्त्याख्यां करोति प्रथमां कृतिम् ।
अनेन कृतिपुष्पेण प्रीयतां परमेश्वरः ॥ ७ ॥

अत्र तावत् प्रथमं परिभाषाप्रकरणं प्रारभ्यते । प्रणम्येति । देवं वेदस्वरूपम्, शब्दब्रह्मरूपम्, नित्यम् । सच्चिदानन्दं सत्यरूपम्, ब्रह्मरूपम्,

दुःखक्लेशादिरहितम्, सर्वदा सुखसंवेद्यम्। सान्द्रं घनीभूतम्, सर्वत्र व्याप्तम्। आद्यन्तवर्जितम् उत्पत्तिलयरहितम्, एतादृशम्। सनातनं परमेश्वरम्। प्रणम्य नमस्कृत्य। ऋग्वेदे गलितं ब्रह्मयज्ञपारायणादिषु प्राथम्येन प्रोच्यमानस्य ऋचात्मक-वेदस्य द्वितीयप्रकृतिभूते पदपाठे प्रायशः पुनरुक्तपदसमूहानां लोपो भवति। तस्यै-वात्र गलितसंज्ञा। तादृशं पदवृन्दं प्रवक्ष्यते एतादृग् गलितपदसमूहानां नियमो व्याख्यायते। यैर्नियमैर्ये ये पदसमूहा गलिता भवन्ति, तेऽग्रे कथयिष्यन्ते॥ १॥

अलक्ष्यत्वादनूह्यत्वाददृष्टानुविधानतः।
अप्येषां प्रातिशाख्याद्यैरतः समयनामता॥ २॥

अलक्ष्यत्वादिति। प्रतिशाखं भवतीति प्रातिशाख्यम्, आदिपदेन पदगाढ-शिक्षा-सूत्रादिग्रन्था गृह्यन्ते, एभिर्ग्रन्थैरपि। एषां गलितपदानां लक्षणम्, (कियान् पदसमूहो गलितः कश्चापवाद इति व्यावर्तकधर्मविवेचनम्) न कृतमस्ति। अत एवोक्तम्-अलक्ष्यत्वात्। अनूह्यत्वादिति। ऊहस्तर्कः। इमानि पदानि गलन्ति नान्यानीति हेतुभिः स्वयं तर्कितुं न शक्यन्ते, पुनरुक्तत्वादीनां व्यभिचरितत्वात्। अदृष्टानुविधानतो न दृष्टमनुविधानं यतः। यथा छन्दसि दृष्टानुविधिं वैदिकपद-स्वरूपाणां विषये वैदिकप्रक्रियया वैयाकरणाः कुर्वन्ति, न तथाऽस्य केऽपि कुर्वन्तो दृश्यन्ते। अथवा अदृष्टमनुविधानं यतः। पुनर्गतानामपि पदानां क्वचिद् गलितं क्वचिन्नेत्यदृष्टमेवाऽत्रानुविधानं नियामकं यतः। अतः समयनामता अतो हेतोरे-तानि पदानि पदपाठे गलन्ति नैतानीति वैदिकानां परम्परया समयोऽयमुच्यते आचारः। एवञ्च वैदिकानामनादिपरम्पराचारमूलकोऽयं गलितक्रमो न मनःकल्पितः। यथादृष्टं तदीयनियमानुगमोऽत्र ग्रन्थे क्रियत इति॥ २॥

अतः परं गलितपदविषये ये नियमा ग्रन्थकारेणानुगम्यन्ते,ताननुसृत्य प्रथमभागे प्रदर्शितगलितपदवृन्देषु नियमक्रमाङ्का उपन्यस्यन्ते—

ऋचोऽखिला गलन्त्येव यथापूर्वं पुनर्गताः।
नू मे ब्रह्माणि यज्ञेन विनैताभ्यामिति स्थितिः॥ ३॥

नियमक्रमाङ्कः (१)—ऋचोऽखिला इति। संहितायां यत्र कुत्रापि सम्पूर्णा ऋक् पुनरावृत्ता भवति चेत्तस्याः पुनः पाठो भवति। परञ्च पदपाठे त्वशेषेण तस्या लोपो भवति। तां विहायैवाग्रिमं पदं पठ्यते। अयं साधारणो नियमः। द्वावेवास्य

नियमस्यापवादौ—(क) नू मे ब्रह्माणि० (अष्टके ५, अध्याये १ वर्गे २७, मन्त्रः ५)। (ख) यज्ञेन यज्ञमयजन्त० (अष्टके ८, अध्याये ४, वर्गे १६, मन्त्रः ६)। प्रथमस्तस्मिन्नेवाध्याये २६ वर्गान्तात् पुनरावृत्तोऽपि न गलितः। अपरो द्वितीयाष्टकस्य तृतीयाध्यायस्य २३ वर्गे गतोऽपि नात्र गलितः ॥ ३ ॥

त्रिरादिगत एकस्मिन् वर्गेऽर्द्धर्चोऽङ्घ्रिरेव वा ।
गलेत् सर्वत्र योऽन्तेऽङ्घ्रिश्चतुरादिगतः स च ॥ ४ ॥

नियमक्रमाङ्क (२)—त्रिरादिगत इति। एकस्मिन्नेव वर्गे कस्या अपि ऋचः पादोऽर्धर्चो वा त्रिवारं पठितश्चेत् तादृशः पुनर्गतः प्रथमं विहाय द्वितीयपाठात् सर्वत्र लोपो ज्ञातव्यः। पदपाठे यथा—मरुत्ऽभिः। अग्ने। आ। गहि। इत्यङ्घ्रे रुदाहरणम्। अर्द्धर्चोदाहरणं यथा—उलूखलऽसुतानाम्। अव। इत्। ॐ इति। इन्द्र। जल्गुलः। नि० क्र० (३)—योऽन्तेऽङ्घ्रिरिति। अत्रैकस्मिन् वर्ग इति नानुवर्तते। पदग्रन्थे कस्यापि मन्त्रस्यान्तिमः पादश्चतुर्वारमधिकवारं वा पुनर्गतश्चेत् प्रथमं विहाय सर्वत्र गलितो भवति। उदाहरणं यथा—प्रातः। मक्षु। धियाऽवसुः। जगम्यात् ॥ ४ ॥

गलेच्च जागतोऽर्द्धर्चस्त्रैष्टुभश्च पुनर्गतः ।
चतुरादिगतं वर्गे यच्चैकस्मिन् पदत्रयम् ॥ ५ ॥

नि० क्र० (४)—गलेच्चेति। जगतीच्छन्दसः त्रिष्टुप्छन्दसश्च मन्त्रार्धः (पूर्वार्द्धं उत्तरार्द्धो वा) द्वितीयवारमपि पुनर्गतश्चेद् गलितो भवति। जागतोदाहरणं यथा—रथं न दुर्गाद्वसवः० अयं मन्त्रार्द्धः। त्रैष्टुभोदाहरणं यथा—तन्नो मित्रो वरुणो० मन्त्रार्द्धः। (नि० क्र० ५)—चतुरादिगतमिति। एकस्मिन् वर्गे पदत्रयमात्रमप्यादितश्चतुर्वारं पुनरुक्तं चेत्तदपि द्वितीयादि गलितं भवति। उदा० यथा—अस्मे। इत्। ॐ इति ॥ ५ ॥

प्रत्यध्यायं तु शिष्टानि गलितान्यभिदध्महे ।
अर्द्धमर्द्धर्चवाचि स्यादध्यायान्तादितस्त्वथेत् ॥ ६ ॥

प्रत्यध्यायन्त्विति। अस्मिन् परिभाषाप्रकरणे गलितपदज्ञानार्थं साधारणाः पञ्चसंख्याका नियमा उक्ताः। एभिर्नियमैर्बहूनि गलितपदवृन्दानि तु गतार्थानि भवन्ति।

तथापि प्रत्यध्यायमत्रशिष्टं पदसमूहमपि वर्तत एव। यस्य चरितार्थता पूर्वोक्तसाधारणनियमैर्न सम्भूता। तान्येवावशिष्टानि गलितानि प्रत्यध्यायं द्वितीयभागे वक्ष्यन्ते। गलितप्रदीपे यत्र अर्धपदं दृश्यते तत्सर्वत्र मन्त्रार्द्धबोधकं ज्ञेयम्, न तु सामान्यार्द्धवाचकं विशेषार्थवाचकं वा। "तु। अथ। इत्।" इति पदत्रयं त्वध्यायारम्भसूचकं समाप्तिसूचकञ्च वर्तते, न तु पादपूरणादि तस्य प्रयोजनम् ॥ ६ ॥

गलितं यद् गृहीतादि न तन्न्यूनं पदत्रयात्।
अग्निं षष्ठाष्टकोपान्त्याऽध्यायस्थं यद् विहाय तत् ॥ ७ ॥

नि० क्र० (६)—गलितमिति पदपाठे कस्यापि मन्त्रस्यादिगतमन्यत्र वा गतम्, पुनरुक्तं पदवृन्दम्, पदत्रयान्न्यूनसंख्याकं चेद् गलितं न भवति। अयं साधारणो गलितनियमः। परञ्च परिभाषासाध्यगलितेष्वेक एवास्यापवादः, "इन्द्राग्नी सोमपीतये" इत्यस्य शिष्टेष्वभिधानात्। उदाहरणं यथा—"अग्निम्। समुद्रऽवाससम्।" (अष्टके ६, अध्याये ७, वर्गे ९, मन्त्रः ५)। अत्रैव केवलं पदद्वयं गलितमस्ति। स्थलमेतद् विहाय नान्यत्र पदत्रयान्न्यूनं परिभाषासाध्यं गलितं सम्भवति ॥ ७ ॥

तथा चेत्यपि शब्दास्तु न प्रतीकानि केवलाः।
प्रायोऽङ्घ्रिपूरणास्ते च ज्ञेयं चान्यद्विशेषणम् ॥ ८ ॥

(नि० क्र० ७)—तथा चेति। अस्मिन् गलितप्रदीपे 'च' 'इति' 'अपि'-शब्दा बाहुल्येन दृश्यन्ते। परञ्च ते केवला गलितप्रतीकरूपा एव न (प्रतीकभूतास्तु सन्त्येव क्वचित्), अपि तु विशेषतया पादपूरणार्थमेव प्रवृत्ताः। तथा च ततोऽन्यद्विशेषणार्थमिति ज्ञेयम् ॥ ८ ॥

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे
श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुक्तं
परिभाषाप्रकरणं सम्पूर्णम् ॥

---

अथ गलितपरिगणनात्मको

# द्वितीयो भागः

### तत्र प्रथमाष्टकः

अग्निमिन्द्रद्वयं तस्मा एवा ह्यस्य विदुस्तथा ।
अस्माकमग्ने देवांश्च सेमं नोऽयमथास्य च ॥ १ ॥

अत्र 'अग्निम्' इति पदमध्यायारम्भवाचकम् । इन्द्र । आ । याहि । इति गलितं द्विवारम् । ( १, ५, ५—६ ) । तस्मै । इन्द्राय । गायत । ( १, ६, ४ ) । एव । हि । अस्य । ( १, १६, ५ ) । विदुः । ते । तस्य । ( १, २१, ७ ) । अस्माकम् । अस्तु । केवलः । ( १, २५, ४ ) । अग्ने । देवान् । इह । आ । वह । ( १, २८, ४ ) । सः । इमम् । नः । ( १, ३१, ४ ) । प्रथमाध्यायः समाप्तः ॥

अयमिति पदं द्वितीयाध्यायारम्भवाचकम् ।
अस्य । सोमस्य । पीतये । ( २, ८, २ ) ॥ १ ॥

सेमन्नोऽङ्ग्रिश्च वर्गाद्यो यच्चिध्यातून इन्द्र च ।
द्वयं त्वमग्ने प्रथमस्त्वं नो अग्ने द्वयं त्वथ ॥ २ ॥

सः । इमम् । नः । अध्वरम् । यज । ( २, २०, १ ) । यत् । चित् । हि । २, २१, १ ) ( २, २७, १ ) इति द्विवारं गलितम् । आ । तु । नः । इन्द्र ।

( २, २७, १ ) । त्वम् । अग्ने । प्रथमः । (२, ३२, २) (२, ३२, ३) इति द्विः । त्वम् । नः । अग्ने । ( २, ३३, ४ ) (२, ३४, २) इति द्विः । द्वितीयाध्यायः समाप्तः ॥ २ ॥

त्रिर्नः स त्वं च विश्वं सं युष्माकं वरुणोऽङ्घ्रिरित् ।
पातं दस्ना च विश्वेद्यो धृष्णुना त्वं तमिन्द्र च ॥ ३ ॥

द्वितीयश्लोकेऽन्तिमम् 'अथ' इति पदं तृतीयाध्यायारम्भसूचकम् । त्रिः । नः । अश्विना । ( ३, ५, १ ) । सः । त्वम् । नः । अद्य । सुऽमनाः । ( ३, ६, १ ) । विश्वम् । सम् । अत्रिणाम् । दह । ( ३, ११, ५ ) । युष्माकम् । अस्तु । तविषी । ( ३, १८, ४ ) । वरुणः । मित्रः । अर्यमा । ( ३, २२, १ ) । तृतीयाध्यायः समाप्तः ॥ इदिति चतुर्थाध्यारम्भसूचकम् । पातम् । सोमम् । ऋतऽवृधा । ( ४, १, ५ ) । दस्ना । वसु । बिभ्रता । रथे । ( ४, २, १ ) विश्वा । इत् । ता । ते ( ४, ११, ३ ) यः । धृष्णुना । शवसा । (४, २१, ४) । त्वम् । तम् । इन्द्र । पर्वतम् । (४, २२, ६) ॥ ३ ॥

अस्येदेव तथाऽस्येदु त्रयमस्मा इदु म तु ।
द्विस्त्वं हत्यद्धत्यदिन्द्र देवो न च तमुद्वयम् ॥ ४ ॥

अस्य । इत् । एव । (४।२८, ५) । अस्य । इत् । ॐ इति । (४, २९, १-३-४) । अस्मै । इत् । ॐ इति । प्र । ( ४, २९, २-५) । चतुर्थाध्यायः समाप्तः ॥ 'तु' इति पदं पञ्चमाध्यायसूचकम् । त्वम् । ह । त्यत् । इन्द्र । ( ५, ४, ५) ( ५, ५, २) इति द्विः । ह । त्यत् । इन्द्र ( ५, ५, १) । देवः । न । यः । (५, १६, ३) । तम् । ॐ इति । त्वा । (५, २६; ३-४) ॥ ४ ॥

आ नो अग्नेऽथ वस्वीर्द्विर्या ते धामानि चाप्यथ ।
त्वाया हविरथा सोम स्याङ्घ्रिरेवाद्ययोर्ऋचोः ॥ ५ ॥

आ । नः । अग्ने । ( ५, २८, ३ ) । अध्यायः समाप्तः पञ्चमः ॥ 'अथः' इति पदं षष्ठाध्यायसूचकम् । वस्वीः । अनु । स्वऽराज्यम् । (६, ७, १-२) । या । ते । धामानि । (६, २२, ४) । अध्यायः समाप्तः ॥ 'अथ' इति पदं सप्तमाध्यायसूचकम् । त्वाऽया । हविः । चकृम । ( ७, १३, ३ ) । अथ । सोमस्य । पिबतम् । सुतस्य, ( ७, २७, १-२ ) ॥ ५ ॥

यदिन्द्राग्नी परमस्यामद्ध्र्यस्मान् वृधे च तु ।
भास्वती द्विरुषास्तद्वां तद्वां शंस्यं शतं युवम् ॥ ६ ॥
विष्णाप्वं च शतं मेषान् द्विरावां रथमित्यथः ॥

यत् । इन्द्राग्नी इति । परमस्याम् । पृथिव्याम् । मध्यमस्याम् । अवमस्याम् । उत । स्थः । (७, २७, ५) । अस्मान् । इन्द्राग्नी इति । अवतम् । (७, २६, ३) । वृधे । च । नः । भवतम् । वाजऽसातौ । (७, ३७, ४) । सप्तमाध्यायः समाप्तः ॥ इदमिति-पदमष्टमाध्यायसूचकम् । भास्वती । नेत्री । सूनृतानाम् । (८, १, ४) उषाः । अजीगः । भुवनानि । विश्वा । (८, १, ४) (८, २, १) । तत् । वाम् । नरा । (८, १०, २) । तत् । वाम् । नरा । शंस्यम् । (८, १४, १) । शतम् । कुम्भान् । असिञ्चितम् । (८, १४, १) । युवम् । नश । स्तुवते । (८, १४, २) । विष्णाप्वम् । ददथुः । विश्वकाय । (८, १४, २) । शतम् । मेषान् । वृक्ये । (८, १६, २) । आ । वाम् । रथम् । (८,१८, ५) (८, २०, १) । अष्टमाध्यायः समाप्तः ॥

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेव-
कृतपदप्रकाशवृत्तियुते प्रथमाष्टकः ॥

———

## अथ द्वितीयाष्टकः

प्र तन्नो विश्वे देवो नोऽमिनती पादपञ्चकम् ॥ ७ ॥

'प्र' इति पदं प्रथमाध्यायसूचकम् । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः । (१, ३, ४) । देवः । नः । अत्र । सविता । (१,७,१) । अमिनती । दैव्यानि । व्रतानि । (१) प्रऽमिनती मनुष्या । युगानि । (२) ईयुषीणाम् । उपऽमा । शश्वतीनाम् (३) इति पादत्रयम् ।

चतुर्थे प्रथमोषा विसनस्त्वं नस्तवायमित् ।
आदस्यारान् विश्रयन्तां होतारा चरणा विला ॥ ८ ॥

पूर्वस्मिन् श्लोकोक्तपादपञ्चकेषु पादत्रयं क्रमेणोक्तम् । चतुर्थे पादे आद्यन्तं पदं विहाय पदत्रयमेव गलितम् । यथा—प्रथमा । उषाः । वि । (१, ७, ३) । पञ्चमः

पादः। एषा। दिवः। दुहिता। प्रति। अदर्शि। (१, ७, ४)। सः। नः। त्रासते। (१, १५, २)। त्वम्। नः। इन्द्र। राया। (१, १७, ५)। तव। अयम्। भागः। (१, २४, ३)। 'इत्' इति पदमध्यायसमाप्तिसूचकम्। प्रथमाध्यायः समाप्तः॥ आत्। अस्य। ते (२, ६, ३)। अरात्। न। नेमिः। (२, ६, ४)। वि। श्रयताम्। ऋतऽवृधः। (२, १०, ६)। होतारा। दैव्या। कवी इति। (१) यज्ञम्। नः। यक्षताम्। इमम्। (२) (२, ११, २)। इला। सरस्वती। मही। (२, ११, ३)॥ ८॥

अग्निर्हव्यामथीद्यदीं प्रवश्चान ऊर्जं प्रायुः।
वसू द्विः सर्वा ताते ऽङ्ग्रिरुतों तेषां तथैककम्॥ ९॥

अग्निः। हव्या। सुसूदति। देवः। देवेषु। मेधिरः। (२, ११, ५)। मथीत्। यत्। ईम्। (२, १७, १)। प्र। वः। पान्तम्। (२, २५, १)। आ। नः। ऊर्जम्। वहतम्। अश्विना। युवम्। (२, २७, ४)। प्र। आयुः। तारिष्टम्। निः। रपांसि। मृक्षतम्। सेधतम्। द्वेषः। भवतम्। स चाऽभुवा। (२, २७, ४)। इति द्वितीयोऽध्यायः॥ 'वसू' इति पदमध्यायारम्भसूचकम्। सर्वा। ता। ते। अपि। देवेषु। अस्तु। (१) (३, ८, ४) (२) (३; ६, ४)। उतो इति। तेषाम्। अभिऽगूर्तिः। नः। इन्वतु। (३, ६, २)॥ ६॥

सर्वा ता द्विरुप मागादिन्द्रं मित्रमहं हि नु।
अध यच्चैषवः शुष्मिन् तमो मः प्राव ऊ नु च॥ १०॥

सर्वा। ता। ते। (३, १०, २)। उप। प्र। अगात्। (१) (३, १३, २) (२) (३, १३, ३)। इन्द्रम्। मित्रम्। वरुणम्। अग्निम्। (३, २२, ६)। अहम्। हि। उग्रः। (३, २५, ५)। 'नु' इत्यध्यायसमाप्तिसूचकं पदम्। इति तृतीयोऽध्यायः॥ अथ। यत्। एषाम्। (४, ६, १)। एषः। वः। स्तोमः। मरुतः। (४, ११, २)। शुष्मिन्ऽतमः। हि। ते। मदः। द्युम्निन्ऽतमः। उत। क्रतुः। (४, १८, ५)। मः। एकः। चर्षणीनाम्। (४, १६, २)। प्र। आवः। वाजिषु। वाजिनम्। (४, १६, ५)। ऊँ इति। नु। पत्नीः। (४, २२, २)॥ १०॥

आ वां रथोऽतारिष्माऽथो तनो द्विरधयत्तव।
होताराङ्ग्रिद्वयं यो चिन्वर्ध सोवर्जमेव तत्॥ ११॥

आ। वाम्। रथः। (४, २५, ३)। अतारिष्म। तमसः। पारम्। अस्य। (४, २६, ६)। 'अथ' इति पदं पञ्चमाध्यायारम्भसूचकम। उत। नः। ईम्। (५, ५, २-३)। अथ। यत्। एषाम्। (५, ५, ४)। तव। त्ये। पितो इति। (५, ६, ५)। होतारा। दैव्या। कवी इति ॥१॥ यज्ञम्। नः। यज्ञताम्। इमम् ॥२॥ (५, ६, २)। चित्। नु। न। मरन्ति। नो इति। वयम्। मराम। आरे। अस्य। योजनम्। हरिऽस्थाः। मधु। त्वा। मधुला। चकार। (५, १६, १)। अस्मिन् मन्त्रे 'सः' पदस्य इतिकरणत्वात् तत्पदवर्जो मन्त्रार्द्धो गलितः ॥ ११ ॥

**ताश्चिन्न्वर्धं ता मरन्ति वर्जमारे इमा उषु।**

**अथाध्वर्यवो यः स धारयत् सास्मै तु सो अपाम् ॥१२॥**

चित्। नु। न। नो इति। वयम्। इत्यादि पूर्वगतान्येकादशपदानि। (५, १६, २)। ताः। मरन्ति। इति पदद्वयवर्जो मन्त्रार्द्धोऽत्र गलितः। आरे। अस्य। इत्याद्यष्टपदानि पूर्वगतान्येव (५, १६, ३)। इमाः। ऊँ इति। सु। श्रुधि। गिरः। (५, २७, १)। अध्यायः समाप्तः॥ 'अथ' इति पदं षष्ठाध्यायाधिकारार्थम्। अध्वर्यवः। यः। शतम्। (६, १४, १)। सः। धारयत्। पृथिवीम्। पप्रथत्। च। (६, १५, २)। सः। अस्मै। अरम। (६, २१, २)। अध्यायः समाप्तः॥ सप्तमाध्याये गलितस्थलमेकमेव। अत्र 'तु' इति पदमध्यायारम्भसूचकं निश्चयात्मकं च। सः। अपाम्। नपात्। (७, २४, ३)॥ १२॥

**अथ सोमं द्रविणोदो द्वयमेतानि वां तथा।**

**ता सम्राजाद्धर्चं जन्मन्जन्मन्नध्यैभिरग्यथ ॥ १३ ॥**

'अथ' इत्यष्टमाध्यायाधिकारार्थम्। सोमम। द्रविणःऽदः। पिब। ऋतुऽभिः। (८, १, २-३)। एतानि। वाम्। अश्विना। (८, ५, ३)। ता। सम्ऽराजा। घृतासुती इति घृतऽआसुती। आदित्या। दानुनः। पती इति। (८, ८, १)। जन्मन्ऽजन्मन्। निऽहितः। जातऽवेदाः। (८, १६, ६)। आ। एभिः। अग्ने। (८, २७, ४)। अष्टमाध्यायः समाप्तः॥

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुते द्वितीयाष्टकः॥

---

२

## अथ तृतीयाष्टकप्रारम्भः

**प्र ये देवानष्टमेऽन्त्येऽप्यग्ने त्वं रोदसी अथ ।**
**प्रजानँश्च नि रीरमन्तदिन्वस्य गुहाहितम् ॥ १४ ॥**

'प्र ये' इति पदद्वयमध्यायारम्भार्थम् । देवान् । देवऽयते । यज । (१, ८, २) । (१, ३४, २) । अग्ने । त्वम् । रोदसी । नः । (१, १५, ६) । प्रथमाध्यायः समाप्तः ॥ अथेति द्वितीयाध्यायाधिकारार्थम् । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् । (२, १७, ४) । नि । रीरमन् । यजमानासः । अन्ये । (२, १७, ५) । तत् । इत् । नु । अस्य । (२, २४, ३) । गुहा । हितम् । गुह्यम् । गुळ्हम् । अप्ऽसु । (२, २६, १) अध्यायः समाप्तः ॥ १४ ॥

**त्वर्वावतश्चेन्द्रचातूपेन्द्रसोमाश्च यत्र च ।**
**नो दम्येभिरदब्धानि हितमित्रो न चौषधीः ॥ १५ ॥**

'तु' इति पदमध्यायारम्भसूचकम् । अर्वाऽवतः । नः । आ । गहि । (३, २, ३) । इन्द्र । इह । ततः । आ । गहि । (३, २, ४) । आ । तु । नः । इन्द्र । (३, ३, १) । उप । नः । सुतम् । आ । गहि । (३, ५, १) । इन्द्र । सोमाः । सुताः । इमे । (३, ५, ५) । यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । (३, २०, १) । नः । दम्येभिः । अनीकैः । (३, २४, १) । अदब्धानि । वरुणस्य । व्रतानि । (३, २७, ३) । हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः । (३, ३१, ६) । ओषधीः । उत । आपः । रयिम् । (३, ३१, ७) । अध्यायः समाप्तः ॥ १५ ॥

**अथान्त्यं चोत्त्रिरा सर्वं राजाना सुवृतैह च ।**
**अर्धं रथो ह वामेता ते च जायेव पत्य इत् ॥ १६ ॥**

त्रिः । आ । दिवः । (४, १, ७, ८) । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । (४, १, ७) । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः । (४, ३, ३) । आ । इह । यातम् । पथिऽभिः । देवऽयानैः । (४, ३, ५) । रथः । ह । वाम् । (४, ४, ४) । एता । ते । अग्ने । उचथानि । वेधः । (४, १६, ५) । जायाऽइव । पत्ये । उशती । सुऽवासाः । (४, २०, २) इदित्यध्यायः समाप्तः ॥१६॥

ऊर्ध्वः स देवान्प्रत्यग्निः सविताद्या च षट्पदी ।
आप्राश्च त्वं महान्ममच्चन त्वाहन्नहिं तथा ॥ १७ ॥

ऊर्ध्वः । ऊं इति । सु । नः । (५, ४, १) । सः । देवान् । आ । इह । वक्षति । (५, ८, २) । प्रति । अग्निः । उषसः । (५, १४, १) । सविता । देवः । अश्रेत् । ज्योतिः । विश्वस्मै । भुवनाय । (५, १४, २) । अत्र गलितपदषट्कम् । आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । (५, १४, २) । त्वम् । महान् । इन्द्र । (५, २१, १) । ममत् । चन । त्वा । (५, २६, ३) । अध्यायः समाप्तः ॥ अथेति पदं षष्ठाध्यायाधिकारार्थम् । अहन् । अहिम् । परिऽशयानम् । अर्णः । (६,१,२) ॥१७॥

आ न आयातु तातूत आतूनोऽप्यमियच्चिदित् ।
अनः श्वश्च रथं येचो तस्मास्येन्द्रा युवं तथा ॥ १८ ॥

आ । नः । इन्द्रः । (६, ३, २) । आ । यासु । इन्द्रः । (६, ५, ३) । ता । तु । ते । (६, ७, १) । आ । तु । नः । इन्द्र । (६, २७, १) । अभि । त्वा । गोतमाः । गिरा । (६, २८, ४) । यत् । चित् । हि । (६, २६, ३) । इदित्यध्यायः समाप्तः ॥ अथ सप्तमाध्यायः । अनश्वः । जातः । अनभीशुः । (७, ७, १) । रथम् । ये । चक्रुः । सुऽवृतम् । (७, ७, २) । उत । स्म । अस्य । (७, १२, ४) । इन्द्रा । युवम् । वरुणा । (७,१५,५) ॥१८॥

अस्माकमत्र तं वां च स्वर्णास्य च स सुष्टुभा ।
अथापि वरुणो मित्रो धिया स्याम तथैव च ॥१९॥

अस्माकम् । अत्र । पितरः । (७,१८,३) । तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । (७, २०, १) । स्वः । न । शुक्रम् । तन्वम् । ते । आ । रजः । (७, २१, ६) । अस्य । सोमस्य । पीतये । (७, २५, ५) । सः । सुऽस्तुभा । सः । (७, २६, ५) । सप्तमाध्यायः समाप्तः ॥ अथेत्यष्टमाध्यायाधिकारार्थम् । वरुणः । मित्रः । अर्यमा । (८, ७, ५) । धिया । स्याम । रथ्यः । सदाऽसाः । (८, ८, ४) ॥१९॥

होतारमग्निमित्यर्धं दशस्यन्तः पदं विना ।
त्वद्धोता चेळितो अग्न आते अग्न इति त्वथ ॥२०॥

होतारम् । अग्निम् । मनुषः । नि । सेदुः । उशिजः । शंसम् । आयोः । (८, १६, ४) । अस्मिन्मन्त्रार्धे दशस्यंत इतिपदवर्जं सर्वं गलितम् । त्वत् । होता । पूर्वः । अग्ने ।

यजीयान्। (८, १६, ५)। ईळितः। अग्ने। आ। वह। इन्द्रम्। चित्रम्। इह। प्रियम्। (८, २०, ३)। आ। ते। अग्ने। (८, २२, ५)। इति पदमष्टमाध्यायसमाप्तिसूचकम्। ॥२०॥

इति श्रीलदमीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुते तृतीयोऽष्टकः॥

---

## अथ चतुर्थाष्टकप्रारम्भः

त्वां द्विः परं त्वं नो अग्ने तवत्ये अग्न इत्यपि।
देवान् देवयते देवैर्न्यग्निं सर्वं दधात तु ॥२१॥

'त्वाम्' इति चतुर्थाष्टकारम्भकं पदम्। त्वम्। नः। अग्ने। (१, २, ३-७)। अनयोर्मध्ये एव गलितम्। यत्। तव। त्ये। अग्ने। अर्चयः (१, २, ५)। देवान्। देवऽयते। यज। (१, १३, १)। देवैः। आ। सत्सि। बर्हिषि। (१, १६, ५)। नि। अग्निम्। जातऽवेदसम्। (१, २०, २)। दधात। देवम्। ऋत्विजम्। प्र। यज्ञः। एतु। आनुषक्। अद्य। देवव्यचःऽतमः (१, २०, २-३)। अत्र सर्वमिति पदेन 'दधात' इत्यारभ्य 'देवव्यचस्तमः' इत्यन्तं मन्त्रद्वयगतं गलितं ज्ञेयम्। 'तु' पदेनाध्यायसमाप्तिर्दर्शिता ॥२१॥

उतत्येमाद्विः स्वर्भानुर्नो मित्रश्च तथोपवः।
मातुष्पदे परमे च तमृचः कामयन्त ऋक् ॥२२॥

उत। त्ये। मा। (२, २, ४-५)। स्वःऽभानुः। तमसा। अविध्यत्। आसुरः। (२, १२, ४)। नः। मित्रः। वरुणः। अर्यमा। आयुः। इन्द्रः। ऋभुक्षाः। मरुतः। (२, १३, २)। उप। वः। आ। ईषे। (२, १४, २)। मातुः। पदे। परमे। (२, २२, ४)। तम्। ऋचः। कामयन्ते। अग्निः। जागार। तम्। ॐ इति। सामानि। यन्ति। अग्निः। जागार। तम्। अयम्। सोमः। आह। तव। अहम्। अस्मि। सख्ये। निऽओकाः। (२, २५, ५)। अध्यायः समाप्तः ॥२२॥

अथेन्द्रश्च वयं स्याम दिवोऽश्मानं चिदित्यपि।
प्रच्यावयन्ति ह्यरुषी रावामश्वास इत्यथ ॥२३॥

अथेत्यध्यायाधिकारार्थम् । इन्द्रः । च । वायो इति । एषाम् (३, ६, १) । वयम् । स्याम । पतयः । रथीणाम् (३, १८, ५) दिवः । चित् । रोचनात् । अधि । (३, १६, १) । अश्मानम् । चित् । स्वर्यम् । प्र । च्यवयन्ति । यामऽभिः । (३, १६, ४) । अत्र पर्वतं गिरिमिति पदद्वयं विहाय मन्त्रार्धो गलितः । हि । अरुषीः । रथे । (३, २०, १) आ । वाम् । अश्वासः । (३, ३०, ४) । इतिपदमध्यायसमाप्त्यर्थम् ॥२३॥

वरुणोऽस्य निबर्हिष्या नोऽश्विनौ च सहीयसि ।

यद्येन स्तावां नामानि परं तं त्वा विशांचयः ॥२४॥

पूर्वश्लोकेऽन्तिमम् अथपदं चतुर्थाध्यायारम्भवाचकम् । वरुणः । मित्रः । अर्यमा । (४, ५, ३) । अस्य । सोमस्य । पीतये । (४, ६, ३) । नि । बर्हिषि सदतम् । सोमऽपीतये । (४, १०, २) । आ । नः । दिवः । बृहतः । पर्वतात् । आ । (४, १७, ४) । अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् । (४, १६, १) । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते । (४, २१, ३) । अत्र 'सहीयसि' पदादेव गलितसंज्ञा जाता । यत् । चित् । हि । ते । (४, २१, ५) । ये । नः । राधांसि । (४, २२, २) । ता । वाम् । एषे । रथानाम् । (४, ३२, ४) । नामानि । चित् । दधिरे । यज्ञियानि । (४, ३५, ४) । तम् । त्वा । वयम् । (४, ३६, २) । विशाम् । कविम् । विश्पतिम् । (४, ३६, ३) । यः । आऽहुतिम् । परि । वेद । (४, ३६, ४) । अध्यायः समाप्तः ॥२४॥

तुवेषी सजायमाना नोऽस्माकं दुरितापरम् ।

आ देवाँस्तमुत्त्वा दित्या ना देवा नात इत्यथ ॥२५॥

'तु' इतिपदमध्यायप्रारम्भाधिकारार्थम् । वेषि । हि । अध्वरिऽयताम् । (५, २, ५) । सः । जायमानः । परमे । विऽओमनि (५, १०, २) । अस्माकम् । अग्ने । मघवत्ऽसु । (५, १०, ६) । दुःऽइता । तरेम । ता । तरेम । तव । अवसा । तरेम । (५, १६, ५) । 'परम्' इति पदं "अच्छानो मित्रमह" इति ऋङ्मन्त्रस्य दुरितान्तो भागो गलित इति ज्ञापयति । आ । देवान् । वक्षि । यक्षि । च (५, २१, २) । तम् । उँ इति । त्वा । (५, २३, ५) आदित्यान् । मारुतम् । गणम् । (५, २५, ४) । आ । देवान् । सोमऽपीतये । (५, २६, ४) । आ । ते । अग्ने । (५, ३०, २) । इतिपदमध्यायसमाप्तिसूचकम् ॥२५॥

तमुष्टुहि तमुस्तुषे स नो बोधीति षोडशे ।
एदं बर्हिश्च सोमेभिरीं विद्याम मदे सदक् ॥२६॥

पूर्वस्मिन् श्लोकेऽथेतिपदं षष्ठाध्यायाधिकारार्थम् ॥ तम् । ऊँ इति । स्तुहि । यः । ( ६, ४, १ ) । तम् । ऊँ इति । स्तुषे । इन्द्रम् (६, ११, २) । सः । नः । बोधि । ( ६, १६, ३ ) । आ । इदम् । बर्हिः । यजमानस्य । सीद । (६, १६, २) सोमेभिः । ईम् । पृणात । भोजम् । इन्द्रम् । (६, १६, ४) । विद्याम । वस्तोः । अवसा गृणन्तः । (६, २०, ४) । मदे । सत् । ऊँ इति । अस्य । पीतौ । इन्द्रः । सत् । अस्य । सख्ये । चकार । रणाः । वा । ये । निऽसदि । सत् । ते । अस्य । पुरा । विविद्रे । सत् । ऊँ इति । नूतनासः । ( ६, २३, २ ) । आदिमपदद्वयवर्ज्योऽयं मन्त्रो गलितः ॥२६॥

स स्तेनोऽथाहं श्चकर्हि पाता वृत्रं परं तम ।
या त ऊतिर्य एकोऽङ्घ्रिरिमाः परमधस्म चेत् ॥२७॥

सः । जनासः इन्द्रः । ( ६, २५, ५ ) । स्तेनः । ईशत । मा । अघऽशंसः । ( ६, २५ । ७ ) । षष्ठाध्यायः समाप्तः ॥ अथेति पदं सप्तमाध्यायाधिकारार्थम् । अहन् । अहिम् । परिऽशयानम् । अर्णः । ( ७, २, ४ ) । कर्हि । स्वित् । तत् । इन्द्र । यत् । ( ७, ७, ३ ) । पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । वृत्रम् । वज्रेण । मन्दसानः । (७, १८, ५) । 'हन्ता' इति पदवर्ज्यो मन्त्रार्धो गलितः । तम् । ऊँ इति । त्वा । ( ७, २३, १ ) । या । ते । ऊतिः । ( ७, २३, ४ ) । यः । एकः । इत् । तम् । ऊँ इति । स्तुहि । ( ७, २४, १ ) । पादोऽयं गलितः । इमाः । ऊँ इति । त्वा । ( ७, २६, ३ ) । अध । स्म । नः । ( ७, २६, १ ) । इदिति पदमध्यायसमाप्तिसूचकम् ॥ २७ ॥

यू यं हि द्वादशे यूयं ह्यङ्घ्रिस्तीर्णे तथाप्यथेम् ।
द्विरारिखास्य सोमस्य ता नोयावामुपेत्यथ ॥२८॥

यूयम् । हि । स्थ । (८, १२, १) । यूयम् । हि । स्थ । सुऽदानवः । (८, १३, ५) । पादोऽयं गलितः । स्तीर्णे । बर्हिषि । समऽइधाने । अग्नौ । ( ८, १६, ७ ) । अथ । ईम् । अस्मभ्यम् । रन्धय । ( ८, १८, १–२ ) । पादोऽयं द्विवारं गलितः । आ । रिख । किकिरा । कृणु । ( ८, १८, ३ ) । अस्य । सोमस्य । पीतये । ( ८, २६, ५ ) ।

ता । नः । मृळातः । ईदृशे । ( ८, २७, ५ ) । याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा । (८, २८, ३) । उप । इदम् । सवनम् । सुतम् । (८, २८, ४) । इतिपदेनाध्यायसमाप्तिः सूचिता ।। २८ ।।

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुते चतुर्थाष्टकः ।।

---

## अथ पञ्चमाष्टकप्रारम्भः

**स्तुषे नास्य च तोके वा चावां चो पाप्युदुद्वयम् ।**
**रक्षो तो त्वा दस्य शंयदग्निरीशे कविस्तथा ।।२६।।**

पूर्वश्लोकगतमथेतिपदं पञ्चमाष्टकाधिकारार्थम् ।। 'स्तुषे' इति प्रथमाध्यायारम्भकं पदम् । न । अस्य । वर्ता । न । तरुता । ( १, ८, ३ ) । तोके । वा । गोषु । तनये (१, ८, ३) । आ । वाम् । अश्वासः । (१, १३, ४) । उप । ब्रह्माणि । शृणुतम् । ( १, १३, ७ ) । उत् । ॐ इति । स्यः । देवः । सविता । ( १, १५, १–४ ) । रक्ष । माकिः । नः । अघऽशंसः । ईशत । ( १, २०, ५ ) । उतो इति । नः । एभिः । ( १, २४, ४ ) । 'तु' इतिपदमध्यायसमाप्तिनिदर्शकम् ।। अथ द्वितीयोऽध्यायः । आत् । अस्य । वातः । अनु । वाति । शोचिः । ( २, ३, २ ) । शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । ( २, ११, ६ ) । अग्निः । ईशे । बृहतः । ( २, १४, ४ ) कविः । गृहऽपतिः । युवा । ( २, १८, २ ) ।। २६ ।।

**त्वं नः पाहि त्वं हि रत्नधास्त्वं हत्यत्सनाप्यथ ।**
**स नः स्तुतश्च योनिष्ट इन्द्रा कारितमेत्यपि ।। ३० ।।**

त्वम् । नः । पाहि । अंहसः । ( २, २०, ५ ) । त्वम् । हि । रत्नऽधाः । असि । ( २, २१, ६ ) । त्वम् । ह । त्यत् । इन्द्र । ( २, २६, २ ) । सना । ता । ते । इन्द्र ( २, ३०, १ ) । अपिपदमध्यायसमाप्तिसूचकम् । अथेति तृतीयाध्यायाधिकारार्थम् । सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः। ( ३, ७, ६ ) । योनिः । ते । इन्द्र । ''अकारि । तम् । आ । ( ३, ८, १ ) । अस्मिन् 'सदने' इतिपदं विहाय अवशिष्टं गलितम् ।। ३० ।।

**वयमिन्द्र प्र वोऽस्माकमस्माकं चरणोऽपि च ।**
**एवेन्नुकं द्विर्यमेन मा न आरोदसी तथा ॥ ३१ ॥**

वयम् । इन्द्र । त्वाऽयवः । (३, १५, ४) । प्र । वः । महे । (३, १६, ४) । अस्माकम् । बोधि । अविता । ( ३,१६, १ ) । अस्माकम् । बोधि । अविता महाऽधने । (३, २१, ५) । एव । इत् । नु । कम् । ( ३, २२, ३ ) । इति द्विर्वारं गलितम् । यमेन । ततम् । परिऽधिम् (३, २४, २) । मा । नः । अहिः । बुध्न्यः । रिषे । धात् । (३, २६, ७ ) । द्वैपदिकोऽयं वर्गः । आ । रोदसी । वरुणानी । शृणोतु । ( ३, २७, २ ) ॥ ३१ ॥

**शं नः सत्यस्य चादित्या अथोदुःष्यहिरण्ययीम् ।**
**तथा ऽयं च मित्रस्तन्नः प्र द्यावा नि षुस्वप ॥ ३२ ॥**

शम् । नः । सत्यस्य । ( ३, ३०, २ ) । आदित्याः । रुद्राः । वसवः । (३, ३०, ४) । अध्यायः समाप्तः ॥ अथेतिपदं चतुर्थाध्यायदर्शकम् । उत् । ऊँ इति । स्यः । देवः । सविता ।···हिरण्ययीम् । अमतिम् । याम् । अशिश्रेत् । (४, ५, १) । अस्मिन् गलितमन्त्रार्धे 'ययाम' इति पदं वर्ज्यम् । अभि । यम् । देवी । ( ४, ५, ४ ) । मित्रः । तत् । नः । वरुणः । ( ४, १६, २ ) । प्र । द्यावा । यज्ञैः । पृथिवी इति । ( ४, २०, १ ) । नि । सु स्वप । ( ४, २२, ३ ) ॥ ३२ ॥

**स्तोतॄनिन्द्रस्य युष्माकमथ सस्वश्चिदित्यपि ।**
**यच्छंतूद्वेति मित्रस्तन्नोऽविष्टं प्रति वां द्वयम् ॥ ३३ ॥**

स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् । दुच्छुनऽयसे । नि । सु । स्वप । (४, २२, ४) । युष्माकम् । देवाः । अवसा । अहनि । प्रिये । (४, २६, २) । चतुर्थाध्यायः समाप्तः॥ अथेतिपदं पञ्चमाध्यायाधिकारार्थम् ॥ सस्वरिति । चित् । हि । (५, २, ४) । यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । (५, ४, ३) । उत् । ऊँ इति । एति । (५, ५, २) । मित्रः । तत् । नः । वरुणः । (५, ६, ३) । अविष्टम् । धियः । जिगृतम् । पुरंऽधीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः । (५, ६, ५) । प्रति । वाम् । सूरे । उत्ऽइते (५, ७, १) । प्रति । वाम् । सूरे । उत्ऽइते । (५, ६, २) ॥३३॥

**पातं प्रयातं न्यूर्ध्वं चातारिष्मेमा उ वां तथा ।**
**विपतं मान एताश्चास्थाद्रथं च व्युषा अथ ॥३४॥**

पातम्। सोमम्। ऋतऽवृधा। (५, ११, ४)। प्र। यातम्। वरम्। आ। (५, १७, ६)। नि। पेदवे। ऊहथुः। आशुम्। अश्वम्। (५, १८, ५,) ऊर्ध्वम्। भानुम्। सविता। देवः। अश्रेत्। (५, १९, ४) अतारिष्म। तमसः। पारम्। अस्य। प्रति। (५, २०, १)। इमाः। ॐ इति। वाम्। (५, २१, १)। पिबतम्। सोम्यम्। मधु। (५, २१, २) मा। नः। मर्धिष्टम्। आ। गतम्। (५, २१, ३)। एताः। ॐ इति। त्याः। (५, २५, ३) आ। अस्थात्। रथम्। (५, २५, ४) वि। उषाः। आवः। (५, २६, १) अध्यायः समाप्तः। अथेति पदं षष्ठाध्यायाधिकारार्थम्॥३४॥

न तमंहस्तथानो नियुद्भिरर्ध्वमपीदृशम्।
यत्सींचमानो दुःशंसोऽररुषः सप्तपद्यथ॥३५॥

न। तम्। अंहः। न। (६, २, २) आ। नः। नियुत्ऽभिः। शतिनीभिः। अध्वरम्। सहस्रिणीभिः। उप। याहि। यज्ञम्। (६, १४, ५) यत्। सीम्। आगः। चकृम। तत्। सु। (६, १९, २) मा। नः। दुःऽशंसः। ईशत। (६, १८, १) अररुषः। धूर्तिः। प्रणक्। मर्त्यस्य। इन्द्राग्नी इति। शर्म। यच्छतम्। (६, १८, २) अत्र सप्तपदात्मकं गलितम्। अध्यायः समाप्तः। अथेति सप्तमाध्यायाधिकारार्थम्॥३५॥

इन्द्रासोमात्वद्य वयमुत्वाऽभित्वा च सप्तयः।
अथ यद्वां रथस्तेन नो यूयं हिष्ठ कद्धते॥३६॥

इन्द्रासोमा। वर्तयतम्। दिवः। (७, ५, ५) आ। तु। अद्य। (७, १३, १) वयम्। ॐ इति। त्वा। (७, २०, १) अभि। त्वा। पूर्वऽपीतये। (७, २६, २) सप्तयः। अध्वरऽश्रियः। वहन्तु। सवना। इत्। उप। (७, ३२, ४) सप्तमाध्यायः समाप्तः॥ अथेतिपदमष्टमाध्यायाधिकारार्थम्। यत्। वाम्। रथः। विऽभिः। पतात्। (८, ५, २)। तेन। नः। वाजिनीवसू इति वाजिनीऽवसू। (८, ६, ५)। यूयम्। हि। स्थ। सुऽदानवः। (८, २०, २)। कत्। ह। नूतम्। कधऽप्रियः। (८, २४, १)। ते। भानुऽभिः। वि। तस्थिरे। (८, २४, ६)॥३६॥

आ नो यातं परं यन्नासत्या ऋक् नाम्बरे परम्।
आनोगन्तं वृत्रहन्तमेवेत् द्विरत एत्यथ॥ ३७॥

आ । नः । यातम् (८, २५, ५) । 'परम्' इत्यस्यान्तिमो मन्त्रः । यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । अग्रे 'अम्बरे' पदं विहाय परमित्यनेन मन्त्रस्योत्तरार्धो विहितः । यथा—अतः । सहस्रऽनिर्णिजा । रथेन । आ । यातम् । अश्विना । ( ८, २७, ४ ) । आ । नः । गन्तम् । ( ८, २८, ४ ) वृत्रहन्ऽतमा । ता । नः । भूतम् । ( ८, २९, २ ) । एव । इत् । काण्वस्य । बोधतम् । (८, ३१, ४) (८, ३४, २) । अतः आ । यातम् । अश्विना । ( ८, ३४, ६ ) इतिपदं पञ्चमाष्टकसमाप्तिसूचकम् ॥ अथेति षष्ठाष्टकाधिकारार्थम् ॥३७॥

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुते पञ्चमाष्टकः ॥

---

## अथ षष्ठाष्टकप्रारम्भः

**यो मही द्विरादित्तेऽङ्ग्रिर्द्विः स्तोतायत्त इत्यपि ।**
**वृषा ग्रावा वृषा त्वा च तत्स्वर्धं वरुणोऽवतु ॥३८॥**

थ इति पदम् अध्यायारम्भप्रतीकम् । महीः । अस्य । प्रऽनीतयः । पूर्वीः । उत । प्रऽशस्तयः । (१, ५, १) । आत् । इत् । ते । हर्यता । हरी इति । वव्रक्षतुः । (१, ६, १-२) आत् । इत् । ते । विश्वा । भुवनानि । येमिरे । (१, ६, ४–५) । उभयत्र पादो गलितः । स्तोता । यत् । ते । (१, १०, ४) । वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयम् । सुतः । ( १, १३, २ ) । वृषा । त्वा । वृषणम् । हुवे । वज्रिन् । चित्राभिः । ऊतिऽभिः । (१, १३, ३) । तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । (१, २५, ३) । एषु त्रिषु स्थलेषु मन्त्रार्धो गलितः । वरुणः । मित्रः । अर्यमा । ( १, ३२, १ ) । अव । स्थिरा । तनुहि । ( १, ३२, ५ ) । अध्यायसमाप्तिनिदर्शकः 'तु'-शब्दः ॥३८॥

**इह त्योदस्य च सनो देवं देवं व ऋकूमसः ।**
**वयं वरुण एको द्विराशर्माग्नि व इदथ ॥३९॥**

इह । त्या । पुरुऽभूतमा । ( २, ५, ३ ) उत् । अस्य । शोचिः । अस्थात् । ( २, ६, ४ ) सः । नः । स्तवानः । आ । भर । (२, १५, ३) देवंऽदेवं । वः । अवसे । ( २, ३३, ३ ) प्र । सः । क्षयम् । तिरते । वि । महीः । इषः । यः । वः । वराय । दाशति । प्र । प्रऽजाभिः । जायते । धर्मणः । परि । अरिष्टः । सर्वः । एधते । इयमृक्

संपूर्णा गलिता । ( २, ३३, ६ ) वयम् । तत् । वः । ( २, ३४, ६ ) वरुणः । मित्रः । अर्यमा । ( २, ३५, २ ) एकः । बिभर्ति । हस्ते । ( २, ३६, ४ ) ( २, ३६, ५ ) द्वैपदिकाविमौ मन्त्रौ । आ । शर्म । पर्वतानाम् । ( २, ३९, ५ ) अग्निम । वः । पूर्व्यम् । (२,४०,४) अध्यायसमाप्तिसूचकमिदिति पदम् । अथेति तृतीयाध्यायाधिकारारम्भ ॥३९॥

यो देवत्तमिहत्यैन्द्रान्त्य मानो याहि च त्रिषु ।
आ जिन्वतं द्विः पिबतं पादौ पञ्च शचीपते ॥४०॥

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । ( ३, २, ३ ) देवत्तम् । ब्रह्म । गायत । ( ३, ६, २ ) इह । त्या । सधऽमाधा । ( ३, ६, ४ ) आ । इन्द्र । याहि । ( ३, ११, १ ) आ । नः । याहि । ( ३, १३, १ ) आ । इषम् । नः । वोळहम् । अश्विना । ( ३, १४, ५-६ ) त्रिषु स्थानेषु पञ्चपदसमूहो वर्तते । तत्रैकस्मिन् मूलपदानि सन्ति स्थानद्वये गलितानि च । इदं स्थानं विचारणीयम् । जिन्वतम् । उत । जिन्वतम् । (३, १६, ५-६) पिबतम् । सोम्यम् । मधु । आ । यातम् । अश्विना । आ । गतम् । (३, १७, ४) अत्रपादौ गलितौ । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः । ( ३, १९, २, ३, ४, ५, ६ ) ॥४०॥

तथोतोनु वयं चैवा वां त मीळिष्वते घ च ।
अग्निमीळे सदेवैरा तस्मा इन्द्रं यदिन्द्र तु ॥४१॥

तथा । शृणु । यथा । अश्वयोः । अत्रेः । कर्माणि । कृण्वतः । प्र । त्रसदस्युम् । आविथ । त्वम् । एकः । इत् । नृऽसह्ये । इन्द्र । ( ३, १९, ७ ) अत्र पदाधिकपादचतुष्टयं गलितम् । उतो इति । नु । चित् । यः । ( ३, २५, ५ ) वयम् । स्याम । पतयः । रयीणाम् । ( ३, २५, ६ ) एव । वाम् । अळ्हे ऊतये । यथा । अहुवन्त । मेधिराः । ( ३, २८, ६ ) तम् । इळिष्व । यः । ( ३, ३३, २ ) ते । घ । इत् । अग्ने । सुऽआध्यः । ( ३, ३४, ५ ) अग्निम् । ईळे । सः । ऊँ इति । श्रवत् । ( ३, ३७, १ ) देवैः । आ । सत्सि । बर्हिषि । ( ३, ३८, ४ ) तस्मै । पावक । मृळय । ( ३, ४१, ३ ) इन्द्रम् । सोमे । सचा । सुते । ( ३, ४७, ४) यत् । इन्द्र । मृळयासि । नः । ( ३, ४८, ३ ) 'तु' इतिपदमध्यायसमाप्तिसूचकम् ॥४१॥

स्यामेद्वयं स्याम वालखिल्यानामेव ताँस्तुहि ।
तुर्ये वर्गे त्रिपद्यः षट् तं त्वा योनश्च सप्तमे ॥४२॥

स्याम् । इत् । इन्द्रस्य । शर्मणि । ( ४, ७, ५ ) वयम् । स्याम । पतयः । रयीणाम् । ( ४, १३, ३ ) गलितप्रदीपकारेण वालखिल्यसूक्तगतानां मन्त्राणां संख्या संहितायां न परिगणिता । अपि तु तेषां संख्या पृथग्रूपेण संगृहीता । अतस्तुर्ये वर्गे सप्तमे नवमे इति विशेषेण वर्गसंख्यापरिगणिताऽस्ति । (१) उद्रीऽइव । वज्रिन् । अवतः । ( ४, १७, १ ) (२) यत् । ह । नूनम् । (३) यत् । वा । पृथिव्याम् । (४, १७, २) (४) हरयः । ये । ते । (४, १७, ३) (५) यथा । प्र । आवः । (४, १७, ४) (६) यथा । कण्वे । मघऽवन् । ( ४, १७, ५ ) इति वालखिल्यस्य चतुर्थे वर्गे षट् त्रिपद्यः । तम् । त्वा । वयम् । ( ४, २०, ४ ) यः । नः । दाता । ( ४, २०, ५ ) इति सप्तमे वर्गे द्वौ ॥४२॥

यस्मै सरायश्च तं त्वा नवमेऽपीत्त्यथो परम् ।
सत्वं नो यः शंसते च यदिन्द्रे दं न इत्यपि ॥४३॥

यस्मै । त्वम् । वसो इति । दानाय । (…सः । रायः । पोषम् । (४, २१, १) तम् । त्वा । वयम् । (४, २२, २) । इति पदत्रयं नवमे वर्गे । इतिपदं वालखिल्यसमाप्तिसूचकम् । परमित्यस्य अत इत्यर्थः । अथ शब्दः पुनः संहितासूचकः । सः । त्वम् । नः । (४, ३४, ४) यः । शंसते । स्तुवते । ( ४, ४३; ६ ) यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः । ( ४, ४६; १ ) इदम् । नः । बर्हिः । आऽसदे । ( ४, ४६, ६ ) ॥४३॥

अस्मे वयं घा महि ऋक् तत्स्वादित्यायदप्यथ ।
वस्त्रिष्टुभं च तं घानु पूर्वामनु नकिः परम् ॥४४॥

अस्मे इति । धेहि । श्रवः । बृहत् । (४, ४७, ३) वयम् । घ । ते । (४, ५०, ३) महि । वः । महताम् । अवः । वरुण । मित्र । अर्यमन् । अवांसि । आ । वृणीमहे । ( ४, ५१, ४ ) तत् । सु । नः ।…आदित्याः । यत् । मुमोचति । ( ४, ५४, ३ ) अपिशब्द एकस्मिन्नेव मन्त्रार्धे नव्यं सन्यस इति पदद्वयं विहाय द्वौ भागौ गलिताविति ज्ञापनार्थः । अध्यायः समाप्तः । अथशब्दः पञ्चमाध्यायाधिकारार्थः । वः ।

त्रिऽस्तुभम् । इषम् । (५, ५, १) तम् । घ । ईम् । इत्था । नमस्विनः। उप । स्वऽराजम् । आसते । (५, ७, ७) अनु । प्रत्नस्य । ओकसः । ( ५, ७, ८ ) पूर्व्याम् । अनु । प्रऽयतिम् । ( ५, ७, ८ ) गलितमिदं मन्त्रस्योत्तरार्धं । नकिः । तम् । कर्मणा । नशत् । ( ५, ८, ३ ) परमित्यग्रिमश्लोकेनसंवन्धं ज्ञापयति ।।४४।।

त्वं नस्त्वं न उतो न्वस्य यन्नो गव्येभिरस्य च ।
अनूभाते सत्यमङ्घ्रिरात्वेतोन्विन्द्रमान इत् ।।४५।।

त्वम् । नः । इन्द्र । (५, १०, २) । त्वम् । नः । अग्ने । (५, ११, १) उतो इति । नु । अस्य । यत् । (५, १७, ३) । नः । गव्येभिः । अश्व्यैः । (५, २०, ५) । अस्य । सोमस्य । पीतये (५, २७, ६) । अनु । त्वा । रोदसी इति । उभे इति । (५, २८, ५) । उभा । ते । बाहू इति । (५, ३०, ६) । सः । त्वम् । नः । इन्द्र । मृळय । (५, ३५, २) । चरणोऽयं गलितः । आ । तु । नः । इन्द्र । (५, ३७, १) । एतो इति । नु । इन्द्रम् । स्तवाम । (५, ३७, ४) । आ । नः । भर । (५, ३८, १) । इदितिपदमग्रिमाध्याय-सूचकम् ।।४५।। अध्यायः समाप्तः ।।

तीव्राश्च वरुणो यूयं व्यङ्क्या वां मधुमन्तमा ।
पातं वयं हिताधाना वन्तमिन्द्रं च तम्वभि ।।४६।।

तीव्राः । सोमासः । आ । गहि । (६, १, २) । वरुणः । मित्रः । अर्यमा । (६, ३, २) । यूयम् । हि । स्थ । सुऽदानवः । इन्द्रऽज्येष्ठाः । अभिऽद्यवः । (६, ४, ४) अत्र पादद्वयं क्रमेण गलितम् । आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत । ६, १०, ३) । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । (६, १०,४) आ । नूनम् । यातम् । अश्विना । (६, १०, ५) । पातम् । सोमम् । ऋतऽवृधा (६, १०, ५) । वयम् । हि । वाम् । हवामहे । (६, १०, ६) । ता । वल्गू इति । दस्रा । (६, १०,६) । धानाऽवन्तम । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम । (६, १४, २) । इन्द्रम् । अभि । प्र । गायत । (६, १५, १) । तम् । ऊँ इति । अभि । प्र । (६, १५, ५) ।।४६।।

त्रिकद्रुकेष्वगात्वा च न त्वामिन्द्र यदिन्द्र च ।
त्वामिच्च तत्सुनो विश्वे तथोतो न्वस्य चास्य च ।।४७।।

त्रिऽकद्रुकेषु । चेतनम् । देवासः । यज्ञम् । अत्नत । तम् । इत् । वर्धन्तु । नः । गिरः । (६, १६, १) । आ । त्वा । विशन्तु । इन्दवः । (६, १६, २) । न । त्वाम् । इन्द्र । अति । रिच्यते । (६, १६, २) । यत् । इन्द्र । मृळयासि । नः । (६, २६, ३) त्रिवारग्रहणार्थश्चकारः । त्वाम् । इत् । वृत्रहन्ऽतम । (६, २६, ५) । तत् सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः । (६, २८, ३) । उतो इति । नु । अस्य । (६, २८, ६) । अस्य । सोमस्य । पीतये । (६, २६, ४-५-६) । त्रिपदत्वात् त्रिवारमपि गलितम् । चकारोऽग्रिमश्लोकसमुच्चयार्थः ।।४७।।

एतो नु कुविदङ्गद्वि स्त्रित्वं इत्यद्य एक इत् ।
स वृत्रहा द्विर्यच्छक्रमास्मे न त्वा कदा न इत् ।।४८।।

एतो इति । नु । इन्द्रम् । स्तवाम । (६, ३१, २) । कुवित् । अङ्ग । वेदत् । (६, ३४, १-२) । त्रिपदत्वाद् द्विर्वारमपि । त्वम् । ह । त्यत् । (६, ३५, १-२-३) त्रिपदत्वात् त्रिर्वारमपि । यः । एकः । इत् । (६, ३५, ४) । सः । वृत्रऽहा । इन्द्रः । (६, ३५, ५-६) । त्रिपदत्वाद् द्विर्वारमपि । यत् । शक्र । असि । पराऽवति । यत् । अर्वाऽवति । वृत्रऽहन् । (६, ३६, ४) मा । नः । इन्द्र । परा । वृणक् । (६, ३७, २) । अस्मे इति । इन्द्र । सचा । सुते । (६, ३७, ३) । न । त्वा । देवासः । आशत । (४, ३७, ४) कदा । नः । इन्द्र । रायः । आ । दशस्येः । (६, ३८, ५) इदित्यध्याय-समाप्तिसूचकम् ।।४८।।

आद्ये वर्गे त्वं हि भद्रा विश्वेत्ताङ्घ्रिः सखे कविः ।
त्वयाग्निस्तमर्वन्त मा देवाँश्च तव त्विति ।। ४९ ।।

त्वम् । हि । शश्वतीनाम् । (७, १, ६) । भद्राः । इन्द्रस्य । रातयः । (७, ३, ४) । विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या । (७, ४, ६) । पादोऽयम् । सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व । (७, ५, ६) । कविः । गृहऽपतिः । युवा । (७, ६, १) । त्वया । ह । स्वित् । युजा । वयम् । (७, ६, ३) । अग्निम् । समुद्रऽवाससम् । (७, ६, ५) । (७, १०, १) । पदद्वयमप्यत्र गलितमिति विशेषः । तम् । अर्वन्तम् । न । सानसिम् । (७, ११, २) । आ । देवान् । वक्षि । यक्षि । च । (७, १२, १) तव । क्रत्वा ।

तव। ऊतिऽभिः। (७, २३, १)। 'तु' इतिनिश्चयार्थकमष्टकसमाप्तिसूचकम्। अष्टमे सोमः पुनानोऽध्याये एकमपि गलितं नास्तीति विशेषः ।।४९।।

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुते षष्ठाष्टकः ।।

---

## अथ सप्तमाष्टकप्रारम्भः

अथ प्रणोऽथ ये सोमास आभक्षद्द्वयं तथा ।
देवैर्द्यावापृथिवी चाध्यायेऽध श्वेतमप्यभीम् ।।५०।।

अथशब्दः सप्तमाष्टकाधिकारार्थः। प्रण इति पदद्वयं प्रथमाध्यायारम्भिकम्। अस्मिन्नध्याये गलितं नास्ति। पुनरथशब्दो द्वितीयाध्यायाधिकारार्थः। ये। सोमासः पराऽवति। ये। अर्वाऽवति। सुन्विरे। (२, ५, २) आ। भक्षत्। कन्यासु। नः। (२, १५, १-२) देवैः। द्यावापृथिवी इति। प्र। अवतम्। नः। (२, २२, ५,) अधि। आ। ये। संऽअस्वरन्। (२, ३०, १) अध। श्वेतम्। कलशम्। गोभिः। अक्तम्। (२, ३२, ३) अभि। ईम्। ऋतस्य। दोहनाः। अनूषत। (२, ३३, ३) अध्यायः समाप्तः ।।५०।।

त्वयं सोमोऽप्यथेयर्ति वाचं येनान इत्यपि ।
परिष्यश्च वयं तेद्वे प्रियमिन्द्राय सोम तु ।।५१।।

'तु' इत्यध्यायारम्भसूचकम्। अयम्। सोमः। इन्द्र। तुभ्यम्। सुन्वे। (३, २४,१) अपिशब्दोऽध्यायसमाप्त्यर्थः।। अथेतिपदं चतुर्थाध्यायाधिकारार्थम्। इयर्ति। वाचम्। अरिताऽइव। नावम्। (४, ५, २)। येन। नः। पूर्वे। पितरः। पदऽज्ञाः। (४, १८, ४)। परि। स्यः। सुवानः। (४, २३, ३)। वयम्। ते। अस्य। वृत्रऽहन्। (४, २३, ५)। प्रियम्। इन्द्रस्य। काम्यम्। (४, २३, ६)। (४, २७ १) इतिद्विर्विरम। इन्द्राय। सोम। पातवे। (४, २४, ४)। 'तु' इतिपदेनाध्यायसमाप्तिः, पञ्चमाध्यायारम्भश्च सूचितः ।।५१।।

शिशुं नास्येदिन्द्र इन्द्रायेन्दो सर्वत्र सत्वपः ।
वेषि रक्षाणोऽथ यदाऽऽरोदसी च ऋगप्सुमे ।।५२।।

शिशुम् । न । यज्ञैः । (५, ८, १) अस्य । इत् । इन्द्रः । मदेषु । आ । (५, ६, ३) । इन्द्राय । इन्द्रो इति । परि । स्रव । (५, ६, ४) । अयं पादः सर्वत्र गलितो भवति । सः । तु । पवस्व । परि । पार्थिवम् । रजः । (५, १६, ४) । अपः । वसानः । परि । (५, १६, ६) । वेषि । होत्रम् । उत । पोत्रम् । (५, ३०, २) । रक्ष । नः । अग्ने । (५, ३२, ७) । अध्यायःसमाप्तः । 'अथ'पदेन षष्ठाध्यायः सूचितः । यदा । ते । मर्तः । अनु । भोगम् । आनट् । (६, २, २) । आ । रोदसी इति । वृषभः । रोरवीति । (६, ३, १) । अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा । अग्निम् । च । विश्वऽशम्भुवम् । "अप्सुमे" इत्यारभ्य चतस्रऽऋचो गलिताः सन्ति । ता अनुक्रमेण प्रथमाष्टकस्य द्वितीयाध्याये ११-१२ वर्गयोः समागताः सन्ति । परञ्च ग्रन्थकारेण "ऋगप्सुमे" इत्येकवचनेनोक्तत्वाद् ग्रन्थे एकस्या ऋच एव गलितसंज्ञा । तच्चिन्त्यम् । अत्र "ऋचोऽप्सुमे" इति पाठोऽपेक्षितः । तेनानुक्तानां तिसृणामप्यर्चां गलितसंज्ञासिद्धिः ॥५२॥

परिष्वजाते सलक्ष्मा चापि भद्रे च यत्र च ।
जुहोत यद्व आगश्चाग्ने या ह्यन्त्यं तथाऽप्यथेम् ॥५३॥

परि । स्वजाते । लिबुजाऽइव । वृक्षम् । (६, ८, ४) । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति । (६, १२, १) । अपि । भद्रे । सौमनसे । स्याम । (६, १५, १) । यत्र । नः । पूर्वे । पितरः । पराऽईयुः । (६, १५, २) । जुहोत । प्र । च । तिष्ठत । (६, १६, ४) । यत् । वः । आगः । पुरुषता । कराम । (६, १८, १) । आ । अग्ने । याहि । (६, १८, ५) । अस्य वर्गस्योत्तमे मन्त्रे इदं गलितमिति सूचकमन्त्यं पदम् । अथ । ईम् । एवनम् । (६, २०, २) ॥ ५३ ॥

यस्ते द्रप्सोऽङ्घ्रि रस्कन्नो ह्यं द्राघीय आयुरित् ।
त्वां यज्ञेषु यशश्चक्रे पिबापिबा च तत्तदित् ॥५४॥

यः । ते । द्रप्सः । ··· यः । ते । अंशुः । (६, २५, ३) । अत्र स्कन्न इति पदवर्जेष्ठ पादोऽयं गलितः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः । (६, २६, २) । (६, २६, ३) । इदितिपदमध्यायसमाप्तिं दर्शयति । त्वाम् । यज्ञेषु । ऋत्विजम् । (७, ५, २) । यशः । चक्रे । असामि । आ । (७, ६, २) । पिबऽपिब । इत् । इंद्र ।

शूर। सोमम्। (७, ८, ५)। तत्ऽतत्। इत्। अस्य। पौंस्यम्। गृणीमसि। (७, ६, ५)॥ ५४॥

**अस्मे तेऽस्मे परं त्वं नः सोमैवाहि प्रमेऽथ सम्।**
**मूष इन्द्रं ते विंशे ताऽत आयात्विन्द्र इत्यपि॥ ५५॥**

अस्मे इति। ते। सन्तु। सख्या। शिवानि। (७, ६, ७)। अस्मे इति। रयिम्। नि। धारय। वि। वः। मदे। (७, १०, १)। त्वम्। नः। सोम। (७, १२, ३)। एव। हि। माम्। तवसम्। (७, २१, १)। प्र। मे। देवानाम्। व्रतऽपाः। उवाच। इन्द्रः। विद्वान्। अनु। हि। त्वा। चचक्ष। तेन। अहम्। अग्ने। अनुऽशिष्टः। आ। अगाम। (७, ३०, १)। अध्यायः समाप्तः। अथेत्यष्टमाध्यायाधिकारार्थम्॥ सम्। मा। तपन्ति। अभितः। सपत्नीःऽइव। पर्शवः। (८, १, २)। मूषः। न। शिश्ना। वि। अदन्ति। मा। आऽध्यः। स्तोतारम्। ते। शतक्रतो इति शतक्रतो। (८, १, ३)। इन्द्रम्। मित्रम्। वरुणम्। (८, ७, ५)। ते। आदित्याः। आ। गत। सर्वऽताातये। (८, ८, १)। 'विंशे' इत्यस्य विंशतितमे वर्गे इत्यर्थः। ता। मन्दसाना। मनुषः। दुरोणे। आ। (८, २०, ३)। अतः। आ। यातम्। (८, २१, ३)। आ। यातु। इन्द्रः। (८, २६, १)॥ ५५॥

**आरोदसी च मर्तेषु प्रियश्च व्रजमित्यथ।**

आ। रोदसी इति। अपृणात्। जायमानः। (८, २८, ६)। मर्तेषु। अग्निः। अमृतः। नि। धायि। (८, २६, १) प्रियः। सूर्ये। प्रियः। अग्ना। भवाति। (८, २६, ४)। व्रजम्। गोऽमन्तम्। उशिजः। वि। वव्रुरिति वव्रुः। (८, २६, ५)। 'इति'पदमष्टकसमाप्तिं जनयति।

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तयुतेः सप्तमाष्टकः॥

---

## अथाष्टमाष्टकप्रारम्भः

**प्रेमं मन्द्रं चाहं ध्रुवं विधेत्ता ते प्र वः परम्॥ ५६॥**

पूर्वश्लोकार्धगतमथेति पदमष्टमाष्टकाधिकारार्थम्। प्रेतिपदं प्रथमाध्यायारम्भकम्। इमम्। विधन्तः। अपाम्। सधऽस्थे। (१, १, २)। मन्द्रम्। होतारम्।

उशिजः । (१, १, ४) । अहम् । भुवम् । यजमानस्य । (१, ७, ४) । विश्वा । इत् । ता । ते । (१, ८, ६) । प्र । वः । महे । (१, ६, १) । परमितिपदेनाग्रिमश्लोकसंबन्धो बोध्यः ॥ ५६ ॥

देवा अथेमाः स नो गो जाता यत्वा च तत्तथा ।
ज्योक् च तानोऽप्येवमक्षु हनामोत च रक्षतु ॥ ५७ ॥

देवाः । दधिरे । हव्यऽवाहम् । (१, १२, ४) । अथ । इमाः । विश्वाः । पृतनाः । (१, १२, ५) । सः । नः । यक्षत् । देवऽताता । यजीयान् । (१, १३, १) । गोऽजाताः । उत । ये । यज्ञियासः । पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् । (१, १३, ५) । पादोनमन्त्रोऽयं गलितः । यत् । त्वा । भीते इति । (१, १६, १) । तत् । नाम । गुह्यम् । (१, १६, २) । तथेतिपदं पादपूरणार्थम् । ज्योक् । च । सूर्यम् । दृशे । (१, १६, ४) । ता । नः । विश्वानि । जरिता । (१, २२, ३) । एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये । (१, २५, ३) । मक्षु । कनायाः । सख्यम् । (१, २८, १) ह । नाम । उत । (१, २८, ४) । रक्ष । च । नः । मघोनः । पाहि । सूरीन् । (१, ३०, २) । तुशब्दोऽध्यायसमाप्तिमग्रिमाध्यायारम्भं च सूचयति ॥ ५७ ॥

व्रजं श्रवः प्र प्रजाभिर्यं देवासः प्रवस्तथा ।
रणवस्तेहि मनोर्दैव्या दिवश्चार्धमहन्नहिम् ॥ ५८ ॥

व्रजम् । गोऽमन्तम् । अश्विनम् । (२, २, २) । श्रवः । देवेषु । अक्रत । (२, २, २) । प्र प्रऽजाभिः । जायते । धर्मणः । परि । (२, ५, ३) । यम् । देवासः । अवथ । वाजऽसातौ । यम् । (२, ५, ४) । प्र । वः । वायुम् । रथऽयुजम् । (२, ७, २) तथेति पादपूरणः । रणवः । संऽदृष्टौ । पितुमान्ऽइव । क्षयः । (२, ८, १) । ते इति । हि । द्यावापृथिवी इति । (२, ८, ४) । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः । (२, ११, ४) । दैव्या । होतारा । प्रथमा । (२, १४, ३) । दिवः । पुत्रासः । असुरस्य । वीराः । (२, १५, २) । अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः । (२, १६, ६) ।५८॥

तथा शूर इवे मां मे स्वाहा जायेव पत्य इत् ।
असतस्ते हि चाध्यग्ने महिगर्भं च विद्म च ।।५९।।

तथेत्यध्यायानुवृत्तिज्ञापनार्थम् । शूरःऽइव । धृष्णुः । च्यवनः । (२, १६, ६) । इमाम् । मे । अग्ने । संऽइधम् । (२, २१, १) । स्वाहा । देवाः । अमृताः । मादयन्ताम् । (२, २२, ६) । जायाऽइव । पत्ये । उशती । सुऽवासाः । (२, २३, ४) इदित्यध्यायसमाप्तिदर्शकम् । असतः । सत् । अजायत । (३, १, ३) । ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । (३, ११, ३) । अधि । स्तोत्रस्य । सख्यस्य । (३, १३, ३) । अग्ने । महि । द्रविणम् । आ । यजस्व । (३, १५, ७) । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । (३, १७, ६) । विद्म । तम् । उत्सम् । यतः । (३, १६, ५) ॥५६॥

यदयादप्युदीर्ष्वातः शं नो द्विस्तु न सेश ऋक् ।
स नः परं पृथिवीं द्यां विद्यामार्धममध्यमम् ॥६०॥

यत् । अयात् । सूर्या । (३, २१, ५) उत् । ईर्ष्व । अतः । (३, २४, २) । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे । (३, २८, ३-४) । इति द्विर्वारम् । तु इति अध्यायः समाप्तः । न । सः । ईशे । यस्य । रोमशम् । निऽसेदुषः । विऽजृम्भते ॥ सः । इत् । ईशे । यस्य । रम्बते । अन्तरा । सक्थ्या । कपृत् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ (४, ४, २) । संपूर्णोऽयं मन्त्रः ॥ सः । नः । दिवा । सः । रिषः । पातु । नक्तम् । (४, ५, १) । परमित्यस्यानन्तरमित्यर्थः । पृथिवीम् । द्याम् । उत । इमाम् । (४, ११, ४) । विद्याम । वस्तोः अवसा । गृणन्तः ।... ..उत । ते । इन्द्र । नूनम् । (४, १६, ७) । अत्र मध्यगत 'विश्वामित्राः' इति पदवर्जो मन्त्रार्धो गलितः ॥६०॥

तस्माद्यस्तुभ्यं जायेव यज्ञैस्ते हि महः स तु ।
अर्वद्भिर्यश्च या ओषधीरस्यै समिषं तथा ॥६१॥

तस्मात् । यज्ञात् । सर्वऽहुतः । (४, १८, ४) । यः । तुभ्यम् । अग्ने । अमृताय । (४, २२, १) । जायाऽइव । पत्ये । उशती । सुऽवासाः । (४, २२, ३) । यज्ञैः । अथर्वा । प्रथमः । (४, २४, ५) । ते इति । हि । द्यावापृथिवी इति । (४, २५, १) । महः । सः । रायः । आ । ईषते । (४, २७, १) । 'तु' इति अध्यायसमाप्तिसूचकम् । अष्टमाष्टके पञ्चमोऽध्यायः । अर्वत्ऽभिः । यः । हरिऽभिः । (५, ६, ३) । याः । ओषधीः । सोमऽराज्ञीः । (५, ११, ४) । अस्यै । सम् । दत्त । वीर्यम् । (५, ११, ६)

इषम् । ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभारित्यभाः । ( ५, १५, ६ ) तथेतिपद-मपरेऽनुवृत्त्यर्थम् ॥६१॥

ग्रावा दधिक्रामन्धेना मित्रा आवो यदप्यथ ।
नाहं यस्य व्युचोषासा नक्ता दैव्येन्द्र इत्यपि ॥६२॥

ग्रावा । यत्र । मधुऽसुत । उच्यते । बृहत् । (५, १७, २) । दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । (५,१८, १) । अन्धेन । अमित्राः । तमसा । सचन्ताम् । (५,२३,६) । आवः । यत् । दस्युऽहत्ये । ( ५, २७, ६ ) । अपिशब्दः पूरणार्थः । अथेत्यध्याया-धिकारार्थम् । न । अहम् । तम् । वेद । (६, ५, ४) । यस्य । इदम् । दूतीः (६, ५, ४) । वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । ( ६, ८, ४ ) उषसानक्ता । सदताम् । नि । योनौ । ( ६, ६, १ ) । दैव्या । होतारा । प्रथमा । (६, ६, २) । इन्द्रः । मह्ना । महतः । अर्णवस्य । ( ६, १०, ४ ) इत्यपि पदद्वयमग्रेऽनुवृत्त्यर्थम् ॥६२॥

अर्यः परस्येत्यूर्ध्वासोऽवस्थिरोन्मे इवे इवेत् ।
दुरश्च विश्वा यज्ञस्य रायस्पोषमृतस्य च ॥६३॥

अर्यः । परस्य । अन्तरस्य । तरुषः । (६, १८, ५) इति । ऊर्ध्वासः । अनक्तन् । ( ६, १६, ४ ) । अव । स्थिरा । तनुहि । यातुऽजूनाम् । ( ६, २०, ५ ) । उत् । मा । पीताः । अयंसत । ( ६, २६, ३ ) । इह । वा । इह । वा । (६, २७, ४) । इदित्यध्याय-समाप्तिसूचकम् । अध्यायः समाप्तः । दुरः । च । विश्वाः । अवृणोत । अप । स्वाः । (७, २, ३) । यज्ञस्य । केतुम् । प्रथम् । पुरःऽहितम् । ( ७, ५, ४ ) रायः । पोषम् । यजमानेषु । (७, ६, ३) । ऋतस्य । सानौ । अधि । ( ७, ७, ३ ) । चकारः समुच्चयार्थः ॥ ६३ ॥

ऊर्ध्वो वसानश्च भानुः शुक्रेण च परो दिवा ।
वरुणाऽद्यावुभावघ्री को अद्धा यदि वा न च ॥६४॥

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । (७, ८, २) । वसानः । अत्कम् । सुरभिम् । दृशे । कम् । स्वः । न । (७,८,२) । भानुः । शुक्रेण । शोचिषा । (७,८,३) । परः । दिवा । परः । एना । पृथिव्या । ( ७, १२, ३ ) । वरुण । मित्र । अर्यमन् । (७, १३, २) । वरुणः । मित्रः । अर्यमा । (७, १३, ३) । अत्र अस्मिन् वर्गे प्रतिमन्त्रं

"वरुणो मित्रो अर्यमा" इति पादस्य सत्त्वात् तदेकवारमेव गलितम् । तथा च आदिवर्ज्य-मन्त्रद्वये किञ्चिद्भिन्नत्वाद् द्वावपि पादौ गलितौ ॥ कः । अद्धा । वेद । कः । इह । प्र । वोचत् । (७, १७, ६) । यदि । वा । न । (७, १७, ७) । चकारोऽनुवृत्तिज्ञापनार्थः ॥६४॥

त्वं विश्वेषां यो न इन्द्र पञ्चम्या वयमिन्द्र च ।
सहस्रधारा पयसाऽधस्पदं चरणद्वयम् ॥६५॥

त्वम् । विश्वेषाम् । वरुण । असि । राजा । (७, २०, ४) । यः । नः । इन्द्र । (७, २१, ५) । पञ्चम्येत्यस्य पञ्चमी ऋगित्यर्थः । वयम् । इन्द्र । त्वाऽयवः । (७, २१, ६) । सहस्रऽधारा । पयसा । मही । गौः । (७, २१, ७) । अधःऽपदम् । तम् । ईम् । कृधि । यः । अस्मान् । आऽदिदेशति । (७, २२, २) । अत्र क्रमेण द्वौ पादौ गलिताविति विशेषः ॥६५॥

रायो बुध्नो देव इव यद्वा घासत्यमित्यपि ।
अग्निं सुम्नाय चापि त्वन्नो अग्ने वात इत्यथ ॥६६॥

रायः । बुध्नः । संऽगमनः । वसूनाम् । (७, २७, ३) । देवःऽइव । सविता । सत्यऽधर्मा । (७, २७, ३) । यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म । (७, २७, ५) । इत्यपिशब्दद्वयं सप्तविंशतितमे वर्गे एव त्रीणि गलितानीति ज्ञापनार्थम् । अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः । (७, २८, ६) । त्वम् । नः । अग्ने । (७, २६, ६) । वातः । अनुऽवाति । शोचिः । (७, ३०, ४) । इतिशब्दोऽध्यायसमाप्त्यर्थः । अथेति पदमष्टमाध्यायाधिकारार्थम् ॥६६॥

वयो दासीः सर्वमिमं यज्ञमादित्स्वधां तथा ।
अर्ध सुसंदृशं चापि यस्ते गर्भममध्यमम् ॥६७॥

वयः । वि । तारि । आयुः । (८, २, ६) । दासीः । विशः । सूर्येण । सह्याः । गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । (८, ६, २) । अत्र पादौ गलितौ । इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि । (८, ८, २) । आत् । इत् । स्वधाम् । इषिराम् । परि । अवश्यन् । (८, १५, ५) । इयं पञ्चमी द्विपदा । तथेत्यनुवृत्त्यर्थम् । सुऽसंदृशम् । त्वा । वयम् । प्रति । पश्येम । सूर्य । (८, १६, ५) । मन्त्रार्धोऽयं गलितः । यः । ते । गर्भम् ।......दुःऽनामा । योनिम् । आऽशये । (८, २०, २) । 'अमीवा' इति मध्यमपदवर्जो मन्त्रार्धो गलितः ॥६७॥

यस्ते जिघांसतीत्येकं प्रजां यस्ते जिघांसति ।
यक्ष्मं चाजैष्मताश्चेदं विभ्राजं त्वं त्यमन्तिमम् ॥६८॥

यः । ते । जिघांसति । ( ८, २०, ५ ) । अत्र प्रथमं पदवर्ज्यं गलितम् । प्रऽजाम् । यः । ते । जिघांसति । ( ८, २०, ६ ) । यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । ( ८, २१, ६ ) । अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् । ( ८, २२, ५ ) । ताः । अस्मभ्यम् । पयसा । पिन्वमानाः । ( ८, २७, ३ ) । इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । ( ८, २८, ३ ) । विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः । ( ८, २८, ४ ) । त्वम् । त्यम् । इन्द्र । ( ८, २९, ४ ) । अन्तिममित्यस्यान्तिमो मन्त्रो बोध्यः ॥६८॥

येन सर्वं विराजानि देवश्चापि मृगो न च ।
शन्नोऽपश्यं प्रजायस्व यो विश्वाभिदमित्यथ ॥६९॥

येन । इन्द्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः । इदम् । तत् । अक्रि । देवाः । ( ८, ३२, ४ ) । अत्र सर्वमित्यस्याङ्घ्रित्रयमित्यर्थः । विऽराजानि । जनस्य । च । ( ८, ३२, ५ ) । देवः । सुवतु । धर्मणा । ( ८, ३३, ४ ) । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । (८, ३८, २) । चकारोऽनुवृत्त्यर्थः । शम् । नः । अस्तु । ( ८, ४०, २ ) । अपश्यम् । त्वा । मनसा । ( ८, ४१, २ ) । प्र । जायस्व । प्रऽजया । ( ८, ४१, २ ) । यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च । पश्यति । ( ८, ४५, ४ ) । इदम् । नः । बर्हिः । आऽसदे । ( ८, ४६, १ ) । इत्यथशब्दावष्टकग्रन्थसमाप्तिसूचकौ ॥६९॥

इमं गलितदीपाख्यं भारद्वाज ऋगर्थवित् ।
लक्ष्मीधरोऽकरोत् पूर्वं सम्प्रदायानुसारतः ॥७०॥

भारद्वाजगोत्रीयो वेदमन्त्राणामर्थवेत्ता लक्ष्मीधरनामा द्विजः प्राचीनार्षसम्प्रदायानुसारेणेमं गलितप्रदीपाख्यं ग्रन्थं विरचितवान् ॥७०॥

इति श्रीलक्ष्मीधरसूरिविरचिते गलितप्रदीपे श्रीश्रीकृष्णदेवकृतपदप्रकाशवृत्तियुतेऽष्टमाष्टकः ॥

॥ इति गलितप्रदीपः समाप्तः ॥

॥ ग्रन्थपुष्पमिदं श्रीगुरुचरणारविन्दार्पितमस्तु ॥

## अथानुक्तगलितानां संग्रहात्मकः

# तृतीयो भागः

### तत्र प्रथमाष्टकप्रारम्भः

( नियमानुसारम ३ । ) मरुत्ऽभिः । अग्ने । आवगहि । ( १, ३६–३७ वर्गयोः ८ वारम् ) । ( नि० २ ) । उलूखलऽसुतानाम् । अव । इत् । इन्द्र । जल्गुलः । ( २, २५, ३ वा० ) । ( नि० २ ) आ । तु । नः । इन्द्र । शंसय । ( २, २७, ६ वारम् ) अयमर्धर्चो गलितः ।

( नि० २ ) पूषन् । इह । क्रतुम् । विदः । ( ३–२५, २ ) वारम् ) । ( नि० ३ ) । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् । ( ४–२६–५ ) । ( नि० ५ ) अस्मै । इत् । ॐ इति । ( ४–२७–२८ वर्गयोः ५ वारम् ) ( २६ वर्गे १ वा० ) ( नि० ३ ) । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् । ( ४–२६–६ ) ( ५–३–३ ) । ( नि० २ ) ( ५–५–४ ) ( ५–८–५ ) । द्युम्नैः । अभि । प्र । नोनुमः । ( नि० ३ ) ( ५–२६–४ वारम् ) । अर्चन् । अनु । स्वऽराज्यम् । ( नि० २ ) ( ५, २६–३०–३१ वर्गेषु १५ वारम ) । योज । नु । इन्द्र । ते । हरी इति । ( नि० २ ) ( ६, ३, ४ वारम् ) । अग्ने । सख्ये । मा । रिषाम । वयम् । तव । ( ६, ३०–३१–३२ वर्गेषु १२ वारम् ) ।

( नि० ४ ) । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुःऽ पृथिवी । उत । द्यौः । ( ७, २– –६–११–१३–१५–१७–२३–२४–२५–२७–२६–३१–३२–३७ । इति पञ्चदशवर्गेष्वन्तिमोऽर्धर्चः । (२) देवाः । अग्निम् । धारयन् । द्रविणःऽ दाम् । ( ७, ३–४ वर्गयोः ६ वारम् ) । (१) एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।। ( ७, ४, ४ ) ।। (२) अप । नः । शोशुचत् । अघम् । ( ७, ५, ८ वारम् ) । (२) मरुत्वान् । नः । भवतु । इन्द्रः । ऊती । ( ७, ८–६–१० वर्गेषु १४ वारम् ) । (२) मरुत्वन्तम् । सख्याय । हवामहे । ( ७, १२–१३-वर्गयोः ६ वारम् ।। (१) विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजम् । ( ७, १५, ६ ) ।

—

(२) वित्तम्। मे। अस्य। रोदसी इति। (७, २०–२१–२२–२३ वर्गेषु १७ वारम्)।

(४) रथम्। न। दुःऽगात्। वसवः। सुऽदान वः। विश्वस्मात्। नः। अंहसः। निः। पिपर्तन। (७, २४, वर्गयोः ५ वारम्)। (४) अतः। परि। वृषणौ। आ। हि। यातम्। अथ। सोमस्य। पिवतम्। सुतस्य। (७, २७ वर्गयोः ५ वारम्)।

(२) ताभिः। ऊँ इति। सु। ऊतिऽभिः। अश्विना। आ। गतम्। (७, ३३-३४–३५–३६–३७ वर्गेषु २४ वारम्)। (४) तत्। नः। मित्रः०। मन्त्रार्धोऽयम्। (८, ४-६–७ वर्गान्तेषु गलितः)॥

इति प्रथमाष्टकः

---

## अथ द्वितीयाष्टकः

(नि० १) एष। वः। स्तोमः। मरुतः। इयम्। गीः। मान्दार्यस्य। मान्यस्य। कारोः। आ। इषा। यासीष्ट। तन्वे। वयाम्। विद्याम्। इषम्। वृजनम्। जीरऽदानुम्। मन्त्रोऽयं बहुषु वर्गान्तेषु गलितः। तत्र प्रथमस्थानम् (४, ३, ५)।

(३)। विद्याम्। इषम्। वृजनम्। जीरऽदानुम्॥ अयं पादोऽपि बहुषु वर्गान्तेषु गलितः। प्रथमस्थानं तु (४–६–३)।

(१)। यथा। पूर्वेभ्यः। जरितृऽभ्यः। इन्द्र। मयःऽइव। आपः। न। तृष्यते। बभूथ। ताम्। अनु। त्वा। निऽविदम्। जोहवीमि। विद्याम०। (४, १६, ६)।

(१)। अतारिष्म। तमसः। पारम्। अस्य। प्रति। वाम्। स्तोमः। अश्विनौ। अधायि। आ। इह। यातम्। पथिऽभिः। देवयानैः। विद्याम० पादः (५, १, ६)।

(२)। द्यावा। रक्षतम्। पृथिवीइति। नः। अभ्वात् (५, २–३ वर्गयोः ६ वारम)।

(२)। वातापे। पीवः। इत्। भव। (५, ७, ४–५)।

(१)। ये। स्तोतृभ्यः। गोऽअग्राम्। अश्वऽपेशसम्। अग्ने। रातिम्। उपऽसृजन्ति। सूरयः। अस्मान्। च। तान्। च। प्र। हि। नेषि। वस्यः। आ। बृहत्। वदेम। विदथे। सुऽवीराः। (५, १३, ८)।

अस्य मन्त्रस्यान्तिमः पादोऽपि बहुषु वर्गान्तेषु गलितः।

(५)। सः। जनासः। इन्द्रः। (६, ७-८-६ वर्गेषु १३ वारं गलितम्)।

(२) यः। ता। अकृणोः। प्रथमम्। सः। असि। उक्थ्यः। (६, १०, ३-४)।

(५) (केवलम्) सः। असि। उक्थ्यः। (६, १०, ५) (६, ११ वर्गेऽपि ५ वारम्) (६, १२, २ च)।

(१)। अस्मभ्यम्। तत्। वसो इति। दानाय। राधः। सम्। अर्थयस्व। बहु। ते। वसव्यम्। इन्द्र। यत्। चित्रम्। श्रवस्याः। अनु। द्यून्। बृहत्० पादः। (६, १४, ६)।

(२)। सोमस्य। ता। मदे। इन्द्रः। चकार। (६, १५-१६ वर्गयोः ७ वारम्)।

(१)। नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी। शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्० पादः। अयं मन्त्रोऽपि बहुषु वर्गान्तेष्वतं ऊर्ध्वं गलितः। (६, १६, ५)।

(२)। सः। एनम्। सश्चत्। देवः। देवम्। सत्यम्। इन्द्रम्। सत्यः। इन्दुः। (६, २८, २-३)।

(१)। ब्रह्मणः। पते। त्वम्। अस्य। यन्ता। सुऽउक्तस्य। बोधि। तनयम्। च। जिन्व। विश्वम्। तत्। भद्रम्। यत्। अवन्ति। देवाः। बृहत्० पादः। (७, ३, ६)।

(२) यंऽयम्। युजम्। कृणुते। ब्रह्मणः। पतिः। (७, ४, ४ वारम्)।

(१) मा। अहम्। मघोनः। वरुण। प्रियस्य। भूरिऽदान्वः। आ। विदम्। शूनम्। आपेः। मा। रायः। राजन्। सुऽयमात्। अव। स्थाम्। बृहत्० पादः। मन्त्रोऽयमतः परं बहुवारं गलितः। (७, १०, ६)।

(४) विश्वम्। तत्। भद्रम्० मन्त्रार्धो गलितः (७, २४, ५)।

(१) इन्द्रऽज्येष्ठाः। मरुत्ऽगणाः। देवासः। पूषऽरातयः। विश्वे। मम। श्रुत। हवम्। (८, ६, ५)।

(१) इळाम्। अग्ने। पुरुऽदंसम्। सनिम्। गोः। शश्वत्ऽतमम्। हवमानाय। साध। स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति। (८, २५, ६)। अत ऊर्ध्वमयं मन्त्रो बहुषु वर्गान्तेषु गलितः।

॥ इति द्वितीयाष्टकः समाप्तः॥

## अथ तृतीयाष्टकप्रारम्भः

(१) दैव्या। होतारा। प्रथमा। नि। ऋञ्जे। सप्त। पृक्षासः। स्वधया। मदन्ति। ऋतम्। शंसन्तः। ऋतम्। इत्। ते। आहुः। अनु। व्रतम्। व्रतऽपाः। दीध्यानाः। (१, २, ३)।

(४) आ। नः। गहि। सख्येभिः। शिवेभिः। महान्। महीभिः। ऊतिऽभिः। सरण्यन्। (२, ८, ३)।

(१) शुनम्। हुवेम। मघऽवानम्। इन्द्रम्। अस्मिन्। भरे। नृऽतमम्। वाजऽसातौ। शृण्वन्तम्। उग्रम्। ऊतये। समत्ऽसु। घ्नन्तम्। वृत्राणि। संऽजितम्। धनानाम्॥ (२, ८, ७) मन्त्रोऽयमग्रेऽपि बहुषु वर्गान्तेषु गलितः।

(१) इमम्। कामम्। मन्दय। गोभिः। अश्वैः। चन्द्रऽवता। राधसा। पप्रथः। च। स्वःऽयवः। मतिऽभिः। तुभ्यम्। विप्राः। इन्द्राय। वाहः। कुशिकासः। अक्रन्। (३, १४, ४)।

(२) महत्। देवानाम्। असुरऽत्वम्। एकम् (३, २८-२९-३०-३१) वर्गेषु एकविंशतिवारं पादोऽयं गलितः। (३) तस्य। वयम्। सुऽमतौ। यज्ञियस्य। अपि। भद्रे। सौमनसे। स्याम। (४, ५, ४)।

(१) ये। पायवः। मामतेयम्। ते। अग्ने। पश्यन्तः। अन्धम्। दुःऽइतात्। अरक्षन्। ररक्ष। तान्। सुऽकृतः। विश्वऽवेदाः। दिप्सन्तः। इत्। रिपवः। न। अह। देभुः। (४, २५, ३)।

(१) अनायतः। अनिऽबद्धः। कथा। अयम्। न्यङ्। उत्तानः। अव। पद्यते। न। कया। याति। स्वधया। कः। ददर्श। दिवः। स्कम्भः। समृऽऋतः। पाति। नाकम्। (५, ४, ५)।

(१) नु। स्तुतः। इन्द्र। नु। गृणानः। इषम्। जरित्रे। नद्यः। न। पीपेः। अकारि। ते। हरिऽवः। ब्रह्म। नव्यम्। धिया। स्याम। रथ्यः। सदाऽसाः। (५,२४, ६)। अत ऊर्ध्वमयं मन्त्रो बहुषु वर्गान्तेषु गलितः।

(१) पुरोळाशम्। च। नः। घसः। जोषयासे। गिरः। च। नः। वधूयुःऽइव। योषणाम्। (६, २८, ६)।

(२) क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपऽमस्य । वव्रेः । (७, १७, २)। (१) इहऽ इह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् । (७, २०, ७)। (२) वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये । (७, २४, २–३–४)। (४) देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् । (८, ७, २)।

(१) इळ ॥ सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः । (८, २१, ३)। (२) इषम् । स्तोतृऽभ्यः । आ । भर । (८, २२–२३)। वर्गयोर्नववारं गलितम् ॥

इति तृतीयाष्टकः समाप्तः ॥

— —

**अथ चतुर्थाष्टकप्रारम्भः**

उत । एधि । पृतऽसु । नः । वृधे । (१, ८, ५)।

(२) वृषन् । इन्द्र । वृषऽभिः । वृत्रहन्ऽतम् । (२, ११, २–३)।

(१) देवःऽ देवः । सुऽहवः । भूतु । मह्यम् । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥ उरौ । देवाः । अनिऽबाधे । स्याम ॥ (१) सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ॥ आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥ (२, २९, ५–६–७)।

(२) आ । याहि । अग्ने । अभिऽवत् । सुते । रण । (३, ६, ४-५)।

(२) माध्वी इति । मम । श्रुतम् । हवम् । (४, १५–१६ वर्गयोः ८ वारं गलितम्)।

(२) शुभम् । याताम् । अनु । रथाः । अवृत्सत । (४, १७–१८ वर्गयोरष्टवारं गलितम्)॥ (१) हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः । सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः । (३, २३; ८)।

(१) "समश्विनोरवसा" मन्त्रोऽयं चतुर्थाध्याये १७-१८ वर्गान्तियोरपि च गलितः ॥

(२) हंसौऽइव । पततम् । आ । सुतान् । उप । (४, १६, २-३)।

(५) सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते । (४, २१, २)।

(२) सुऽजाते । अश्वऽसूनृते । ( पादोऽयं २१–२२ वर्गयोः ७ वारं गलितः )। (४) ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति । ( ४, २३, ४ ) ।

(३) मदेम । शतऽहिमाः । सुऽवीराः । ( ५, १२, ७ ) । पादोऽयमतऊर्ध्वं बहुषु वर्गान्तेषु च गलितः । (१) अच्छ । नः । मित्रऽमहः । देव । देवान् । अग्ने । वोचः । सुऽमतिम् । रोदस्योः । वीहि । स्वस्तिम् । सुऽक्षितिम् । दिवः । नॄन् । द्विषः । अंहांसि । दुःऽइता । तरेम । ता । तरेम । तव । अवसा । तरेम । ( ५, १६, ६ ) ।

(१) मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् । शासम् । इन्द्रम् । विश्वऽसहम् । अवसे । नूतनाय । उग्रम् । सहःऽदाम् । इह । तम् । हुवेम । (६, ८, ६) । (१) त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवन्तीः । प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय । तुर्वशम् । यदुम् । स्वस्ति । (६, १०, ७ ) ।

(२) अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब । (७, १५, २–३–४) । (२) सोमः । सुतः । सः इन्द्र । ते । अस्ति । स्वधाऽपते । मदः । ( ७, १६, २–३ ) ।

(१) सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न । स्तोतारम् । निदे । करः । ( ७, २६, २ ) ।

(४) तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम । ( ७, ३२, ३ ) ।

(४) येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च । ( ८, ५, ५ ) ( १ ) विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् । आ । इदम् । बर्हिः नि । सीदत । ( ८, १५, २ )

इति चतुर्थाष्टकः समाप्तः ॥

---

अथ पञ्चमाष्टकप्रारम्भः

(१) । उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः । विऽउष्टौ । अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय । ( १, ५, ६ ) ।

(१) १ आभारती० ऋक् ( १ ) २ तन्नस्तुरीपमध० ऋक् (१) ३ वनस्पते वसृजोप० ऋक (१) ४ आयाह्यग्ने० । इमाश्चतस्र ऋचो द्वितीयाष्टकस्य चतुर्थाध्याये

त्रयोविंशतितमे वर्गेऽनुक्रमेण गताः। अत्रापि पुनः क्रमेणैव समागता इति विशेषः। अस्मिन स्थले ता गलिताः। ( २, २, ३–४–५–६ )।

(३) यूयम्। पात। स्वस्तिऽभिः। सदा। नः ( २, ४, ५ )। पादोऽयमग्रेऽपि बहुषु वर्गान्तेषु गलितः।

(१) त्वम्। अग्ने। वनुष्यतः। नि पाहि। त्वम्। ऊँ इति। नः। सहसाऽवन्। अवद्यात। सम्। त्वा। ध्वस्मन्ऽवत्। अभि। एतु। पाथः। सम्। रयिः। स्पृहयाय्यः। सहस्री। १ (१) एता। नः। अग्ने। सौभगा। दिदीहि। अपि। क्रतुम्। सुऽचेतसम्। वतेम॥ विश्वा। स्तोतृऽभ्यः। गृणते। च। सन्तु। यूयं० पादः। ( २, ६, ४–५ )।

(१) नु। त्वाम् अग्ने। ईमहे। वसिष्ठाः। ईशानम्। सूनो इति। सहसः। वसूनाम्। इषम्। स्तोतृऽभ्यः। मघवत्ऽभ्यः। आनट्। यूयं० पादः। ( २, ११, ७ )।

(१) सः। नः। इन्द्र। त्वऽयतायै। इषे। धाः। त्मना। च। ये। मघऽवानः। जुनन्ति। वस्वी। सु। ते। जरित्रे। अस्तु। शक्तिः। यूयं० पादः। ( ३, ४, ५ )। (१) एवः। नः। इन्द्र। वार्यस्य। पूर्द्धि। प्र। ते। महीम्। सुऽमतिम्। वेविदाम। इषम्। पिन्व। मघवत्ऽभ्यः। सुऽवीराम्। यूयं० पादः। ( ३, ६, ६ )। (१) वोचेम। इत्। इन्द्रम्। मघऽवानम्। एनम्। महः। रायः। राधसे। यत्। ददत्। नः। यः। अर्चतः। ब्रह्मऽकृतिम्। अविष्ठः। यूयं० पादः। (३, १३, ५ ) ( ३, १४, ५ )। (१) नु। रोदसी इति। अभिस्तुते इत्यभिऽस्तुते। वसिष्ठैः। ऋतऽवानः। वरुणः। मित्रः। अग्निः। यच्छन्तु। चन्द्राः। उपऽमम्। नः अर्कम्। यूयं० पादः। ( ३, ८, ७, )। (२) ताः। आपः। देवीः। इह माम्। अवन्तु। ( ४, १६, २–३–४ )। (२) मा। माम्। पद्येन। रपसा। विदत्। त्सरुः। ( ४, १७, २-३ )।

( १ ) तत्। नः। इन्द्रः। वरुणः। मित्रः। अग्निः। आपः। ओषधीः। वनिनः। जुषन्त। शर्मन्। स्याम। मरुताम्। उपस्थे। यूयं० पादः॥ ( ४, २६, ५ )। ( १ ) इयम्। देवा। पुरःऽहितिः। युवऽभ्याम्। यज्ञेषु। मित्रावरुणौ। अकारि। विश्वानि। दुःऽगा। पिपृतम्। तिरः। नः। यूयं० पादः॥ ( ५, ३, ७ )। (१) नु। मित्रः। वरुणः। अर्यमा। नः। त्मने। तोकाय। वरिवः। दधन्तु। सुऽगा। नः। विश्वा। सुऽपथानि। सन्तु। यूयं० पादः॥ ( ५, ५, ६ )। (४) एषः। स्तोमः। वरुण। मित्र। तुभ्यम्। सोमः। शुक्रः। न। वायवे। अयामि॥ ( ५, ७, ५ )। अस्य मन्त्रस्योत्तरार्द्धर्चौ ग्रन्थे उक्ते।

(१) नु । मे । हवम् । आ । शृणुतम् । युवाना । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् । धत्तम् । रत्नानि । जरतम् । च । सूरीन् । यूयं० पादः ॥ ( ५, १६, ८ ) ।

(१) इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् । सुऽवृक्तिम् । वृषणा । जुषेथाम् । इमा । ब्रह्माणि । युवऽयूनि । अग्मन् । यूयं० पादः ॥ ( ५, १८, ६ ) ।

(१) आ । पश्चात्तात् । नासत्या । आ । पुरस्तात् । आ । अश्विना । यातम् । अधरात् । उदक्तात् । आ । विश्वतः । पाञ्चऽजन्येन । राया । यूयं० पादः ॥ (५,२०, ५) । (१) अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः । घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयं० पादः ॥ (५, २७, ३) । (१) अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् । यच्छन्तु । महि । शर्म । सऽप्रथः । अवध्रम् । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे । ( ६, ५, ५ ) । (१) इयम । इन्द्रम् । वरुणम् । अष्ट । मे । गीः । प्र । आवत् । तोके । तनये । तूतुजाना । सुऽरत्नासः । देवऽवीतिम् । गमेम । यूयं० पादः ॥ ( ६, ७, ५ ) । (२) मृळ । सुऽक्षत्र । मृळय । ( ६, ११, २–३–४ ) । (१) अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति । सुस्तुतिऽभिः । वसिष्ठाः । वाजऽयन्तः । सु । अवसे । हुवेम । यूयं० पादः ॥ ( ६, १३, ७ ) । (४) अविष्टम् । धियः । जिगृतम् । पुरंऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ( ६, २२, ४ ) ।

(१) बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य । धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयं० पादः ॥ ( ६, २३, ७ ) । (१) वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे । जुषस्व । शिपिऽविष्ट । हव्यम् । वर्धन्तु । त्वा । सुऽस्तुतयः । गिरः । मे । यूयं० पादः ॥ ( ६, २५, ७ ) ।

॥ इति पञ्चमाष्टकः समाप्तः ॥

---

## अथ षष्ठाष्टकप्रारम्भः

(५) आत् । इत् । ते । ( १, ६, ३ ) । (२) देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥ ( २, ४०, ६–७–८ ) ।

(१) अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति । सोमऽपेयाय । वक्षतः । ( ३, ६, ५ ) । (२) दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो-

इति दिवाऽवसो ॥ ( ३, ११–१२–१३ वर्गेषु १४ वारं मन्त्रार्धो गलितः )। (२) सऽजोषसौ। उषसा। सूर्येण। च। सोमम्। पिवतम्। अश्विना। ( ३, १४, २–३–४ )। (२) अग्रेऽपि 'सजोषसा उषसा सूर्येण च' इति पादः १४–१५–१६–१७ वर्गेषु १८ वारं गलितः। (७) सोमम्। सुतम्। महिषाऽइव। अव। गच्छथः। (२) त्रिः। वर्ति। यातम्। अश्विना। ( ३, १५–२–३ )।

(२) प्रऽजाम्। च। धत्तम्। द्रविणम्। च। धत्तम्। (२) ऊर्जम्। नः। धत्तम्। अश्विना। ( ३, १५, ५–६ )। (२) मरुत्वन्ता। जरितुः। गच्छथः। हवम्। (२) आदित्यैः। यातम्। अश्विना। ( ३, १६, २–३ )।

(२) हतम्। रक्षांसि। सेधतम्। अमीवाः। ( ३, १६, ५ )।

(२) सोमम्। सुन्वतः। अश्विना। ( ३, १६, ५–६ )।

(२) श्यावऽअश्वस्य। सुन्वतः। मदऽच्युता। (२) अश्विना। तिरःऽअन्ह्यम्। ( ३, १७, २–३ )। (२) आ। यातम्। अश्विना। आ। गतम्। अवस्युः। वाम्। अहम्। हुवे। धत्तम्। रत्नानि। दाशुषे। ( ३, १७, ५–६ )।

(२) पिव। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो। (२) यम्। ते। भागम्। आधारयन्। विश्वाः सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्। मरुत्वान्। इन्द्र। सत्ऽपते ॥ ( ३, १८, २–३–४–५–६ )। (२) इन्द्राग्नी इति। तस्य। बोधतम्। ( ३, २०, २–३ )। (२) इन्द्राग्नी इति। आ॥ गतम्। नरा। ( ३, २०, ५–६ )।

(२) इन्द्राग्नी इति। सोमऽपीतये। ( ३, २१, २–३ )। (२, ५) नभन्ताम्। अन्यके। समे। ( ३, २२, २३–२४–२५–२६–२७ वर्गेषु ) ३१ वारं गलितम्। २८ वर्गेऽप्यन्तिमेषु मन्त्रत्रयेषु, (२) नासत्या सोमऽपीतये। इति पादेन सह "नभन्ता मन्यके समे" इति पादः त्रिवारं गलितः॥

(१) पुरुऽत्रा। हि। सऽदृङ्। असि। विशः। विश्वाः। अनु। प्रऽभुः। समत्ऽसु। त्वा। हवामहे। ( ३, ३२, १ )। (२) वसु। स्पार्हम्। तत्। आ। भर। ( ३, ४९, ६–७ )।

(२) अनेहसः। वः। ऊतयः। सुऽऊतयः वः ऊतयः। ( ४, ७, ७–८–९–१० वर्गेषु )। पादोऽयं १७ वारं गलितः॥ (२) भद्राः। इन्द्रस्य। रातयः॥ ( ४, ४०–४१

वर्गयोरेकादशवारं पादोऽयं गलितः। (१) यत्। चित्। हि। शश्वताम्। असि। इन्द्र। साधारणः। त्वम्॥ तम्। त्वा। वयम्। हवामहे॥ (४, ४७, १)।

(२) अन्ति। सत्। भूतु। वाम्। अवः॥ (५,१८-१९-२० वर्गेषु) पादोऽयं १७ वारं गलितः। (३) प्रातः। मक्षु। धियाऽवसुः। जगम्यात्। (५, ३६, ५)।

(२) पिब। इत्। अस्य। त्वम्। ईशिषे। (६, २, ३-४)। (२ मध्वः। सोमस्य। पीतये। (६, ७-८ वर्गयोरष्टवारं पादोऽयं गलितः)। (२) ता। वाम्। विश्वकः। हवते। तनूऽकृथे। मा। नः। वि। यौष्टम्। सख्या। मुमोचतम्। (६, ७, वर्गयोरयं मन्त्रार्धो द्विवारं गलितः) अस्यैवान्तिमः पादोऽस्मिन्नेव वर्गे द्विवारं गलितः॥

(१) इह। त्या। सधऽमाद्या। हरी इति। हिरण्यऽकेश्या। वोळ्हाम्। अभि। प्रयः। हितम्। (६, २५, ४)। (२) उप। नः। हरिऽभिः। सुतम्। (६, २७, १-२-३)।

(२) अथ। नः। वस्यसः। कृधि। (६, २२-२३ वर्गयोः पादोऽयं नववारं गलितः॥ (२, ५) मदेषु। सर्वऽधाः। असि। (८, ८, पादोऽयं षड्वारं गलितः॥ (१) आ। प्यायस्व। सम्। एतु। ते। विश्वतः। सोम। वृष्ण्यम्॥ भव। वाजस्य। संऽगथे॥ (८, २१, ४)।

इति षष्ठाष्टकः समाप्तः

---

## अथ सप्तमाष्टकप्रारम्भः

(१) आ। पवस्व। मदिन्ऽतम। पवित्रम्। धारया। कवे॥ अर्कस्य। योनिम्। आऽसदम्॥ (१, ७, ४)। (२) तरत्। सः। मन्दी। धावति। (१, १५, चतुर्वारं गलितम्)। (२) पान्तम्। आ। पुरुऽस्पृहम्। (२, ६, ४-५)। (१) राज्ञः। नु। ते। वरुणस्य। व्रतानि। बृहत्। गभीरम्। तव। सोम। धाम। शुचिः। त्वम्। असि। प्रियः। न। मित्रः। दक्षाय्यः। अर्यमाऽइव। असि। सोम॥ (३, २४, ८)।

(१) श्रुधि। नः। अग्ने। सदने। सधऽस्थे। युक्ष्व। रथम्। अमृतस्य। द्रवित्नुम्। आ। नः। वह। रोदसी इति। देवपुत्रे इति। देवऽपुत्रे। माकिः। देवानाम्। अप। भूः। इह। स्याः॥ (६, १२, ४)। (५) वि। वः। मदे। (७, ४-५ वर्गयोः ७ वारं गलितम्) (पुनः) वि। वः। मदे। (७, १०-११-१२ वर्गेषु १३ वारं

गलितम् ) (४) अन्यस्याः । वत्सम् । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः । ( ७, १७, ४ ) । (२) स्वति । अग्निम् । सम्ऽइधानम् । ईमहे । ( ८, ६-७-८ वर्गेषु पादोऽयं नववारं गलितः ) (२) तत् । देवानाम् । अवः । अद्य । वृणीमहे । ( ८, ६-१०-११ वर्गेषु पादोऽयं दशवारं गलितः )

(१) गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।। वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ।।

(१) बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु । ( इमौ मन्त्रौ ८, २५-२७ वर्गान्ते च गलितौ ) (४) अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः । धत्त । रयिम् । अस्मे इति । सुऽवीरम् ।। ( ८, २६, ६ ) ।

।। इति सप्तमाष्टकः समाप्तः ।।

---

## अथाष्टमाष्टकप्रारम्भः

(२) अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः । (१, ३-४ वर्गयोः पादोऽयं ७ वारं गलितः ) (१) त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च देवाः । नव । च । असपर्यन् । औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त । ( १, १२-६ ) ।

(२) मनः । जगाम । दूरकम् । (२) तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे । ( १, २०-२१ वर्गयोः ११ वारं गलितम् ) (२) पराऽतरम् । सु । निःऽऋतिः । जिहीताम् । ( १, २२, २-३-४ ) (२) भरताम् । अप । यत् । रपः । द्यौः । पृथिवि । क्षमा । रपः । मोइति । सु । ते । किम् । चन । आममत् । ( १, २३, ४-५ ) । (२) जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये । (१, २५, ४) (४) शुचि । यत् । ते । रेक्णः । आ । अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः । ( १, २८, १ ) ।

(५) अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः । ( २, १, २-३-४ ) । (१) एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी । ईशानासः । नरः । अमर्त्येन । अस्तावि जनः । दिव्यः । गयेन । ( २, ८, ७ ) । (४) ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयं० पादः । ( २, ११, ५ ) ।

(१) देवान्। वसिष्ठः। अमृतान्। ववन्दे। ये। विश्वा। भुवना। अभि। प्रऽतस्थुः। तेन० इति मन्त्रार्धः। ( २, १४, ५ )। (४) किम्। स्वित्। वनम्। कः। ऊँ इति। सः। वृक्षः। आस। यतः। द्यावापृथिवी इति। निःऽततक्षुः। ( ३, १६, ४ )। (२) विश्वस्मात्। इन्द्रः। उत्ऽतरः। ( ४, १–२–३–४ ) वर्गेषु पादोऽयं २२ वारं गलितः )। (१) तव। अग्ने। होत्रम्। तव। पोत्रम्। ऋत्वियम्। तव। नेष्ट्रम्। त्वम्। अग्नित्। ऋतऽयतः। तव। प्रऽशास्त्रम्। त्वम्। अध्वरिऽयसि। ब्रह्मा। च। असि। गृहऽपतिः। च। नः। दमे। ( ४, २१, ५ )। (२) आ। सर्वऽतातिम्। अदितिम्। वृणीमहे। (५,१६–१७ वर्गयोः पादोऽयं १० वारं गलितः )।

(४) सा। नः। दुहीयत्। यवसाऽइव। गत्वी। सहस्रऽधारा। पयसा। मही। गौः। ( ५, १९, ३ )। (४) त्वाम्। स्तोषाम। त्वया। सुऽवीराः। द्राघीयः। आयुः। प्रऽतरम्। दधाना. । ( ६, १९, ३ )। (२) कुवित्। सोमस्य। अपाम्। इति। ( ६, २६-२७ वर्गयोः पादोऽयं १२ वारं गलितः )।

(२) कस्मै। देवाय। हविषा। विधेम। ( ७, ३–४ वर्गयोः पादोऽयं ८ वारं गलितः )। (२) वरुणः। मित्रः। अर्यमा। ( ७, १३, ४–५–६–७ )।

(१) यथा। ह। त्यत्। वसवः। गौर्यम्। चित्। पदि। सिताम्। अमुञ्चत। यजत्राः। एवो इति। सु अस्मत्। मुञ्चत। वि। अंहः। प्र। तारि। अग्ने। प्रऽतरम्। नः। आयुः। ( ७, १३, ८ )। (४) गव्यन्तः। इन्द्रम्। सख्याय। विप्राः। अश्वऽयन्तः। वृषणम्। वाजयन्तः। ( ७, १९, ३ )।

(१) इन्द्रः। सुऽत्रामा। स्वऽवान्। अवःऽभिः। सुऽमृळीकः। भवतु। विश्वऽवेदाः। बाधताम्। द्वेषः। अभयम्। कृणोतु। सुऽवीर्यस्य। पतयः। स्याम ॥१॥

तस्य। वयम्। सुऽमतौ। यज्ञियस्य। अपि। भद्रे। सौमनसे। स्याम। सः। सुऽत्रामा। स्वऽवान्। इन्द्रः। अस्मे इति। आरात्। चित्। द्वेषः। सनुतः। युयोतु ॥२॥ ( ७, १९, ६–७ )।

(४) नभन्ताम्। अन्यकेषाम्। ज्याकाः। अधि। धन्वऽसु। ( ७, २१ वर्गेऽयं पदसमूहः ५ वारं गलितः )। (५) देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्। ( ७, २२, वर्गेऽयं पदसमूहः ५ वारं गलितः )। (२) तान्। चित्। एव। अपि। गच्छतात्। ( ८, १२, २–३–४ )। (५) तम्। इतः। नाशयामसि। ( ८, २०, ४–५–६ )।

(५) वि । वृहामि । ते । (८, २१, ५ वारं गलितम्) । (१) अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ॥ सः । सध्रीचीः । स । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति । (८, ३५, ३) । (२) धातुः । द्युतानात् । सवितुः । च । विष्णोः । (८, ३६, २-३) । (२) क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः । (८, ४०, २-३) । (२) सः । नः । पर्षत् । अति । द्विषः । (८, ४५, २-३-४-५) ।

॥ इत्यष्टमाष्टकः समाप्तः ॥

## ॥ इति तृतीयो भागः ॥

---

## परिशिष्टम्[१]

प्रागधीतपदस्योर्ध्वं यस्य वै पदसंहितम् ।
नाऽध्येयं पदकालेऽपि गलितं तद्विदुर्बुधाः ॥ १ ॥
एकं च केवलं शुद्धं पदं यद्वा पदद्वयम् ।
विनाऽङ्घ्रित्रयमेवैतच्छाखायां न गलेदिह ॥ २ ॥
गलेत् पदत्रयाद्येव चेद् गलेदेवमादिषु ।
दृष्टानुविधिवत् क्लृप्तिर्विबुधैरपि दुःशका ॥ ३ ॥
यदिन्द्राग्नी उतस्थश्चो नूतनासः सदित्यृचि ।
पृथिव्यां मध्यमस्यां च सुजाते अश्वसूनृते ॥ ४ ॥
अग्निं समुद्रवाससमिन्द्राग्नी सोमपीतये ।
पदद्वयं तु गलितं सप्तधैव न चापरम् ॥ ५ ॥
परमस्यां चावमस्यां मदेसच्च चतुर्गलेत् ।
सप्तस्वेकैकमेवेदं पदं [२]गलेत्तु नान्यतः ॥ ६ ॥

---

१. अस्य ग्रन्थस्य प्राचीनहस्तलिखितपुस्तके प्राप्तमन्यत् परिशिष्टमिदं ग्रन्थान्ते दीयते ।

२. 'पदं लुप्तान्यतः परम्' इति पाठः ।

अवशिष्टं तु गलितं स्यात् पदत्रितयादिकम् ।
यथापूर्वगतं तच्च सर्वत्रैवेति बुध्यताम् ॥ ७ ॥
मन्त्रो मृत्युञ्जयाख्योऽत्र ह्यु त्तमोऽस्त्यपदक्रमः ।
पदक्रमोक्तिकाले तु संहितावदधीयते ॥ ८ ॥
मन्त्रोऽत्राद्योऽस्ति भद्रन्न इत्यङ्घ्रिरपदक्रमः ।
पदक्रमोक्तिकाले तु संहितावदधीयते ॥ ९ ॥
प्रजापते न त्वदित्यृगनध्येयपदक्रमम् ।
पदक्रमोक्तिकाले तु संहितावदधीयते ॥ १० ॥
ऋतं चेति तृचं सूक्तमनध्येयपदक्रमम् ।
पदक्रमोक्तिकाले तु संहितावदधीयते ॥ ११ ॥
आकारः समयाद्यस्तु उकारश्च तथाविधः ।
द्वितीये वचने वाच्यौ समयेन सहैव तौ ॥ १२ ॥

॥ इति श्रीलक्ष्मीधरसूरिविरचितं गलितप्रदीपपरिशिष्टं समाप्तम् ॥

---

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रमार्गशीर्षफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी-२" इति संकेतेन विधेयः।

---

प्रकाशक—क्षेत्रेशचन्द्र चट्टोपाध्याय, संचालक—अनुसंधान संस्थान, संस्कृत विश्वविद्यालय, वाराणसी।

मुद्रक—अमलकुमार वसु, इण्डियन प्रेस (प्राइवेट) लिमिटेड, वाराणसी शाखा।